* श्रीः *

श्रीग्रन्थमाला —

यस्या इदं

(१)

प्रथमं प्रसूनम् ।

श्रीमल्लघ्वाचार्यभगवत्पादप्रणीता

# श्रीपञ्चस्तवी ।

सुवर्णपत्राकृतिभिर्वन्द्या विबुधमौलिभिः ।
श्रीकण्ठे श्रीग्रन्थपुष्पमाला विजयतामियम् ॥



सपादकः—

श्रीमान् अमृतवाग्भव आचार्यः

❀ श्रीः ❀

श्रीग्रन्थमालायाः प्रथमं प्रसूनम्—

श्रीमल्लघ्वाचार्यभगवत्पादप्रणीता

# श्रीपञ्चस्तवी

—:[]:[]:—

महामहिम—आचार्य-श्रीमदमृतवाग्भवेन

संशोध्य सम्पादिता ।

—[:]❀[:]—

मुद्रणधनदाता—

श्रीशिवानन्दनाथ सीताबर्डी, नागपुर

प्रकाशकः—

श्रीपीठ बघाटराज्य

पो० सोलन ( शिमला ) पंजाब

———

हिन्दुस्तान एण्टरप्रायजर्स लिमिटेड प्रेस सीताबर्डी, नागपुर द्वारा मुद्रित

| | | |
|---|---|---|
| द्वितीयवार<br>१००० | संवत् २००९ वि० | मूल्य<br>आठ आने |

❀ श्रीः ❀

# श्रीपञ्चस्तवीपरिचय।

**श्रीपञ्चस्तवी** यह एक अत्यन्त अद्भुत व प्राचीनतम स्तोत्ररत्न है। अनन्तकोटि ब्रह्माण्डनायिका राजराजेश्वरी परशिवाम्बा श्रीमहात्रिपुरसुन्दरी इसमें स्तोतव्य देवता हैं। इस के सानुभव पाठसे यथेच्छ फलकी प्राप्ति होती है। सम्पूर्ण देवता प्रसन्न होते हैं। इस स्तोत्रमें अनेक शास्त्रोंके गूढ़ रहस्य भरे पड़े हैं। हमको पहलेपहल इसका परिचय लगभग ९-१० वर्षकी अवस्थामें अपने घरमें ही हो चुका था। काश्मीर में इसका अत्यधिक प्रचार है। सुनते हैं कि दक्षिण भारत में भी इसका प्रचार बहुत है। **महाराजा भोजने** अपने **"सरस्वतीकण्ठाभरण"** ग्रन्थमें इसके श्लोक उदाहरणार्थ लिये हैं। भोज वि० सं० १०५० में जीवित थे ऐसा उनके एक दानपत्रसे निश्चित हो चुका है। काश्मीरमें एक पण्डित की बनायी हुई १६००० श्लोक संख्या की इस स्तोत्र पर एक टीका थी, किन्तु वह अग्निप्रकोपसे उनके घर व कई अद्भुत अनेक पुस्तकोंके साथ जल गयी ऐसा सुना जाता है। इसके प्रथम लघुस्तवकी एक छोटी टीका केरल (अनन्तशयन) से महामहोपाध्याय त० गणपति शास्त्रीने प्रकाशित की थी। उसी पुस्तककी भूमिकामें उन्होंने लिखा है कि "लघुस्तव की 'लघुबृंहणी' नामक व्याख्या २००० श्लोकात्मक अनन्तशयनके राजकीय पुस्तकालयमें है, उसको यथासमय प्रकाशित करेंगे"। निर्णयसागर मुम्बई की काव्यमालामें छपी पुस्तककी टिप्पणीमें लिखा है कि लघुस्तव पर कई टीकाएं मिलती हैं जिसमें एक टीका नित्यानन्दकी है। काश्मीरमें प्राचीन दो टीकाएं हमने देखी हैं, किन्तु दोनों सम्पूर्ण नहीं। सं० १९९० में काश्मीर श्रीनगर के हमारे चिरपरिचित पं० हरभट्ट शास्त्रीजी ने एक टीका श्रीपञ्चस्तवी पर नवीन प्रणीत की है। यह संपूर्ण है। इसकी लगभग १०००० श्लोक संख्या है। अभी मुद्रित नहीं हुई। श्रीपञ्चस्तवीके प्रणेता श्रीमान् **लघ्वाचार्य** ही हैं यह अब पूर्ण निश्चित हो चुका है। "श्रीविद्यार्णव" "श्रीसौभाग्यरत्नाकर" आदि प्राचीन ग्रन्थ व श्री नित्यानन्द जैसे प्राचीन टीकाकारों का मत भी यही है। पुरातत्वज्ञोंकी सम्मतिमें लघ्वाचार्य दक्षिण भारतीय हैं। स्तोत्रके सूक्ष्म स्वाध्यायसे हमें भी ऐसा प्रतीत हुआ। अस्तु। बम्बई, कलकत्ता, मैसूर, अनन्तशयन, काश्मीर आदि से इसका मुद्रण पहले हो चुका है। किन्तु भूमिका आदि से विभूषित सुन्दर मुद्रण कोई नहीं हुआ। तथा ग्रन्थकार **श्रीलघ्वाचार्यका** नाम भी किसीने न दिया।

निवेदकः—**अ० वा० आचार्य**

श्रीः

# श्रीग्रन्थमाला के

संरक्षक—

बघाटमहीमहेन्द्र धर्ममार्तण्ड

प्रमारवंशाऽवतंस राजश्रेष्ठ

## राजा श्री १०५ दुर्गासिंह वर्मा C. I. E.

सोलन ( पंजाब )

—[:]—

प्रधान सम्पादक—

## श्रीमान् अमृतवाग्भव आचार्य



प्रकाशक—

## श्रीपीठ ( बघाटराज्य )

पो० सोलन (पंजाब)

—:o:—

❀ श्रीः ❀

# श्रीग्रन्थमालाके प्रधान सम्पादकके दो शब्द

हमें महान् हर्ष है कि श्रीग्रन्थमालाका सम्पादन हमारे हाथों प्रारम्भ हो रहा है।

*बघाटमहीमहेन्द्र धर्ममार्तण्ड राजश्रेष्ठ*

**राजा श्री १०५ श्रीमान् दुर्गासिंह जी वर्मा C. I. E.**

महोदयने इस श्रीग्रन्थमालाका संरक्षकत्व ग्रहण कर भारतीय साहित्यका महान् उपकार किया है। इसलिए उनको जितने धन्यवाद दिये जाँय वे थोड़े ही हैं।

प्रस्तुत श्री ग्रन्थमालाका प्रथम प्रसूत **श्रीपञ्चस्तवीके** मुद्रणव्ययका भार श्रीज्वालामुखी (कांगड़ा) क्षेत्रनिवासी श्रीमान् ला० रत्नचन्द्रजी सूदने अपने ऊपर लेकर अत्यन्त प्रशंसनीय कार्य किया है। एतदर्थ इनको विशेष धन्यवाद है।

इस कार्यमें केरलप्रान्ताभिजन परमहंस परिव्राजक श्रीमान् स्वामी नारायणगिरि महाराजका प्रोत्साहन हमें प्राप्त हुआ है, अतः उनको भी धन्यवाद है।

प्रस्तुत श्रीपञ्चस्तवीके सम्पादनमें प्रूफ देखना आदि कार्योंमें रायपुरा (मेवाड़) ऽभिजन गणकरत्न श्री पं० हरदेव शर्मा त्रिवेदी ज्योतिःशास्त्रीने सहायता दी है, एतदर्थ उनको सहर्ष धन्यवाद।

आपका कृतज्ञ—

**अमृतवाग्भव आचार्य**

कार्तिक शु० १० शनिवार |
सं० १९९७ वि० |

— अथ प्रशस्तव्याम् —

# श्रीलघुस्तवराजः

## ज्ञानदीपिकया टीकया संवलितः ।

ऐन्द्रस्येव शरासनस्य दधती मध्येललाटम्प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्व्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहस्थिता
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥१॥

ऐन्द्रस्येवेति । एषा प्रत्यक्षा, असौ अप्रत्यक्षरूपा त्रिपुरा देवी, नः अस्माकम्, अघं पापं दुःखं वा छिन्द्यात् विनाशयेदिति सम्बन्धः "अघः पापे च दुःखे च' इत्यनेकार्थवचनात् । किंविशिष्टा देवी वाङ्मयी वचनरूपताम्प्राप्ता । अन्यच्च ज्योतिर्मयी अनिर्वचनीयतेजोरूपेत्यर्थः । अनेन गुरुमुखे प्रत्यक्षा ज्ञानरूपत्वादर्वाग्दशामप्रत्यक्षा चेत्युभयरूपपरमशक्तिध्यानेन दुःखपापच्छेदस्तज्ज्ञानां सुलभ एव । कथं सहसा अप्रतर्कितमेव । लयो हि ज्ञानकारणमुच्यत इत्युक्तेः । कैः कारणभूतैः त्रिभिः पदैः विशेषणभूतैः । किं कुर्व्वती ऐन्द्रस्य इन्द्रसम्बन्धिनः शरासनस्य धनुषः इन्द्रधनुष इव हरितपीतसितासितमाञ्जिष्ठरूपपञ्चवर्णां प्रभां कान्ति दधती धारयन्ती कथं मध्येललाटं "पारेमध्येऽग्रेन्तः षष्ठ्या च" इति सूत्रेण विकल्पेन कर्म्मत्वम् । सर्व्वाङ्गस्य तेजोमयत्वेऽपिललाट एव पञ्चवर्णोल्लासः । अन्यच्च अनुष्णगोरिव चन्द्रस्येव सर्व्वतः समन्तात् शौक्लीं शुक्लरूपां "तस्येदम्" इत्यण् प्रत्ययः, कान्तिमान्वती विस्तारयन्ती शुक्लः पटगुणस्तस्येयं शौक्ली एवंमादरेणोवृद्धिः । दशमद्वारे पूर्णशशाङ्कधवलकान्तिरित्यर्थः । अन्यच्च हृदि हृदयकमले सदाहस्थिता सदा अह्नि दिवसे स्थिता वर्त्तमाना उष्णांशोः सूर्य्यस्य द्युतिः कान्तिरिव । हृदये सुवर्णवर्णा भगवतीति सामान्यरीत्यार्थः ॥ १ ॥

विशेषतश्चास्मिन् वृत्ते सामान्यविशेषाभ्यां त्रिपुराया मन्त्रोद्धारोऽस्ति, वक्ष्यते च प्रान्त्यैकत्रिंशे काव्ये 'बोद्धव्या निपुणं बुधैः स्तुतिरियं यत्राद्यवृत्ते स्फुटम्' इति 'मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः' इत्यादि च। मन्त्रोद्धारः प्रकाश्यते यथा प्रथमपादे यत्प्रथममक्षरं तत्प्रथमबीजम् ( ऐङ्कारः ) द्वितीयपादे द्वितीयमक्षरम् (क्लींकारः) तृतीयपादे तृतीयमक्षरम् ( सौ ) तदपि हस्थितं हकारोपरि स्थितमिति ह्सौ जातं हस्थितमिति विशेषणं पुनरावृत्य व्याख्यातम्. हकारेण बिन्दुना स्थितं निष्ठितं कौलमते हि हकारो गगनमुच्यते, गगनञ्च शून्यं बिन्दुरित्येकार्थमेव ह्सौं सौं इति वा-इति तृतीयबीजाक्षरं त्रिपुरा-मूलमन्त्रो ज्ञेयः। ध्यानविभागोऽप्यत्रैव आदिमं बीजं ललाटे पद्मवर्णं, द्वितीयं शीर्षे श्वेतवर्णं, तृतीयं हृदये पीतवर्णं ध्येयं किञ्च सहसापदैरिति विशेषो ज्ञेयः। सह हकारसकाराभ्यां वर्त्तते इति सहसा बीजत्रयमपि सकारहकारयुक्तं ह्सैं ह्स्क्लीं ह्सौं इत्यादि विशेषो ज्ञेयः। तथा सर्व्वतः इत्यत्रापि विशेषोऽस्ति सरु-इति विभक्तम्पदम् अतोऽस्माल्ललाटादनन्तरं शिरसि क्लींकारः। सरु-इति क्रियापदविशेषणम्। सह रुणा रेफेण वर्त्तत इति सरु उकार उच्चारणार्थः। एतेन क्लींकारेऽधो रेफः सिद्धः। सकारहकारसंयोगश्च पूर्व्वमेवोक्तस्तेन स्ह्क्लीं, इति कूटाक्षरः सिद्धः। यदुक्तम्—'कान्तान्तवान्ताकुललान्तवामनेत्रान्वितं दण्डिकनीलनादम्॥ षट्कूटमेतत्त्रिपुरार्णवोक्तमत्यन्तगुह्यं शिव एव साक्षात्※॥१॥ कान्तं भवान्तं च कुलान्तवामनेत्रान्वितं दण्डिकुलं सनादम्॥ षट्कूटमेतत्त्रि-पुरार्णवोक्तमत्यन्तगुह्यं शिव एव साक्षात्※॥२॥ इति पाठान्तरम्। इत्यादयः-स्त्रिपुराविशेषाः कविहस्तमल्लोक्तास्त्रिपुरासारसमुच्चयाज्ज्ञेयाः। यदि वा 'सरु, इति सविसर्गम्पदं रेफमूलत्वाद्विसर्गाणाम्, तेन ह्सौः इति सविसर्गम्पदमाम्ना-यान्तरं ज्ञेयम्। अथ किमेषा त्रिपुरा उत त्रिपुरभैरवी यथोक्तं पञ्चशास्त्रे त्रिपुरा-मुद्दिश्योद्धारः कृतः "अथातः सम्प्रवक्ष्यामि सम्प्रदायसमन्वितम्। त्रैलोक्य-डामरं तन्त्रं त्रिपुरावाचकं महत्॥१॥' पुनस्तत्रैव-पूर्व्वोक्तं यन्त्रमालिख्य त्रिपुरावाचकं महत्। अथातः सम्प्रवक्ष्यामि त्रिपुराप्रयोगमुत्तमम्॥२॥ पञ्च-रात्रशास्त्रे त्रिपुरा त्रिपुरेति श्रूयते। तत्त्वसागरसंहितायाञ्च तैर्बीजाक्षरैस्त्रिपुरभैरवी कथिता। यथा—"वाग्भवं प्रथमं बीजं द्वितीयं कुसुमायुधम्। तृतीयं

※ वेत्तीति शेषः।

बीजसंज्ञं स्यात्तद्धि सारस्वतं वपुः ॥१॥ एषा देवी मयाख्याता नित्या त्रिपुरभैरवी। एषा सा मूलविद्या तु नाम्ना त्रिपुरभैरवी ॥ २ ॥" तत्कथमित्याह—सत्यम्, बहवोऽस्या उद्धारप्रकाराः सम्प्रदायाः पूजामार्गाश्च। तथा च नारदीयविशेषसंहितायामुक्तम्-"वेदेषु धर्म्मशास्त्रेषु पुराणेष्वखिलेषु च। सिद्धान्ते पाञ्चरात्रे च बौद्ध आर्हतके तथा ॥ १ ॥ तस्मात्सर्वासु सञ्ज्ञासु वाच्यैका परमेश्वरी। शङ्करशास्त्रे तथान्येषु संहिता मुनिभिस्सुरैः ॥ २ ॥" इत्यादि "मन्त्रोद्धारम्प्रवक्ष्यामि गुप्तद्वारेण केशव। विशेषस्त्ववगन्तव्यो व्याख्यातृगुरुवक्त्रतः ॥ ३ ॥" इत्यतः क्वचिन्मन्त्रोद्धारभेदात्क्वचिदासनभेदात्क्वचित्सम्प्रदायभेदात् क्वचित्पूजाभेदात् क्वचिन्मूर्तिभेदात् क्वचिद्ध्यानभेदाद् बहुप्रकारैषा त्रिपुरा क्वचित् त्रिपुरभैरवी क्वचित्त्रिपुरभारती क्वचिन्नित्यत्रिपुरभैरवी क्वचित्त्रिपुरललिता क्वचित्परेण नाम्ना क्वचित् त्रिपुरैवोच्यते सर्व्वप्रकारेण फलदा सैव भगवती। यदाहुः-"न गुरोः सदृशो दाता न देवः शङ्करोपमः। न कौलात्परमो योगी न विद्या त्रिपुरापरा ॥१॥ न पत्न्याः परमं सौख्यं न वेदात्परमो विधिः। न बीजात्परमा सृष्टिर्न विद्या त्रिपुरापरा ॥ २ ॥ दर्शनेषु समस्तेषु पाखण्डे तु विशेषतः। दिव्यरूपा महादेवी सर्व्वत्र परमेश्वरी ॥ ३ ॥" अथ त्रिपुराया जपहोमपूजासाधनध्यानन्यासक्रियाफलादिकं पृथक्पृथक् शास्त्रेभ्यो ज्ञेयम्। यदाहुस्तत्तद्ग्रन्थेषु-"न जापेन विना सिद्धिर्न होमेन विना फलम् ॥ न पूजावर्जितं सौख्यं मन्त्रसाधनकर्म्मणि ॥ १ ॥ न ध्यानेन विना सिद्धिर्न्यासेन विना जपः। न क्रियावर्जितो मोक्षो मन्त्रसाधनकर्म्मणि ॥ २ ॥" यत्नेन सर्वगुह्यमेव मुद्दया प्रदेयं गुरुभिरित्यर्थः ॥ १ ॥

या मात्रा त्रपुषीलतातनुलसत्तन्तूत्थितिस्पर्द्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम्।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा
ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ॥२॥

त्रिपुरायाः प्रथमबीजान्तरमाह-येति। हे भगवति त्रिपुरे! इत्यामन्त्रणपदमध्याहार्य्यं सर्वत्र। त्रपुषीलतातनुलसत्तन्तूत्थितिस्पर्द्धिनी या मात्रा प्रथमे तव वाग्बीजे स्थिता प्रतिष्ठिता तां मात्रां ते वयं त्वद्भक्ता मन्महे।

त्रपुषीलता, उष्णकालेऽरहट्टघटीजलसिक्तक्षेत्रोत्पन्ना कर्कटीवल्ली तस्यां नवाः सूक्ष्माः लसन्तः प्रसरन्तो ये, तन्तवो गुणास्तेषामुत्थितिः प्रथमारम्भस्तस्य स्पर्द्धतेऽनुकरोति। नवोत्पन्नास्तन्तवो विशिष्य कुटिलाकारा भवन्तीत्यर्थः। ईदृशी मात्रा ईदृशाकाररूपा सैव मात्रा। या मात्रेति हे भगवति! तव वाग्बीजे ऐङ्कारे स्थिता तां मात्रां वयं मन्महे। अर्द्धमात्रामपि ऐंकारवद्वाग्बीजं तयाद्रियामहे इत्यर्थः। इयं कुण्डलिनी शक्तिः भगवती विश्वजननव्यापारबद्धोद्यमा विश्वस्य जगतो जननमुत्पादनं तस्य व्यापारः कर्मतन्त्रं तत्र बद्धोद्यमा कृतप्रयासा चतुर्दशभुवनसृष्टिसावधाना त्रिपुरा-इत्थं ज्ञात्वा एवं सम्यगवबुध्य नराः मनुष्याः जननीगर्भे मातृकुक्षौ पुनः अर्भकत्वं डिम्भरूपतां न स्पृशन्ति नानुभवन्ति। ईदृग्रूपं वाग्बीजं प्रथमपरमशक्तिध्यानादपि प्राप्तमहानन्दयोगिनो मोक्षपदमेवाप्नुवन्ति। न च संसारे दुःखभाण्डागारे भूय उत्पद्यन्त इत्यर्थः ॥२॥

दृष्ट्वा सम्भ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे बिन्दुं विनाप्यक्षरम्।
तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे
वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३ ॥

अज्ञानाच्चारितस्याप्येतस्य बीजस्य प्रभावातिशयमाह-दृष्ट्वेति। हे वरदे मनोऽभिलषितवरदानदक्षे! इह जगति सम्भ्रमकारि आश्चर्यकारणं वस्तु पदार्थं सहसा अकस्मात् दृष्ट्वा विलोक्य येनकेनापि पुरुषेण आकूतवशादिति भयाभिप्रायादपि बिन्दुं विनाप्यक्षरम् अनुस्वारवर्जितमक्षरं व्याहृतम् उच्चारितं तस्यापि ऐ ऐ इत्युच्चारकस्य पुरुषस्य ध्रुवं निश्चितमेव हे देवि! भगवति! तरसा बलेन विद्यापाठं विनापि तवानुग्रहे त्वत्प्रसादे जाते सति स्यातुः वक्त्राम्बुजात् मुखकमलात् सूक्तिसुधारसद्रवमुचः अमृतनिर्यासरूपा वाचो निर्यान्ति निःसरन्ति। सार्थकत्वाद्वचनानाममृतोपमानत्वम्। यद्यपि रसद्रवयोरेकार्थता तथाप्यत्र विशेषो ह्यमृतं हि देवानां भोज्यं रसरूपमेव भवति तस्यापि द्रवः सारोद्धारो निर्यास इत्यर्थः। अयमभिप्रायः-प्राणी यदि किमपि अपूर्वपदार्थावलोकेऽपि सम्भ्रान्तचेताः ऐ इत्यक्षरमुच्चारयति। एतावद्वचनबीजाक्षरोच्चारणसन्तुष्टभगवतीप्रसादादविरलविगलदमृतलहरीपरीपाकपेशलवाणीविलासाः प्रसरन्तीत्यर्थः ॥ ३ ॥

यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद् भुवि ।
आख्यानम्प्रतिपर्व-सत्यतपसो यत्कीर्त्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयितां नीत्वोच्चरन्ति स्फुटम् ॥ ४ ॥

यदिति।हे नित्ये सकलकालकलाव्यापिशाश्वतरूपे भगवति ! यत्तव भगवत्याः अपरं द्वितीयं मन्त्राक्षरं कामराजं कामराजनामकं क्लींकाररूपं तदपि निष्कलं शुद्धकोटिप्राप्तं तत् बीजं सारस्वतमिति भुवि पृथिव्यां कश्चित् एव विरलो बुधः विचक्षणोऽवैति वेत्ति जानाति विचारयति प्रसिद्धमपि बीजं विरलो जानातीतिकथने कवेरिदमाकूतम्। निष्कलमिति निर्गतककारलकाराक्षरम् ईं इति प्रसिद्धम्, अपरमिति च अपगतरेफमाम्नायान्तरे ज्ञेयम्। ईदृशञ्चैव गूढाक्षरं विरल एव वेत्ति। यतः "शतेषु जायते शूरः सहस्रेषु च पण्डितः ॥ वक्ता शतसहस्रेषु ज्ञाता भवति वा न वा ॥ १ ॥" इति वचनात्। अस्यैवाक्षरस्य व्यवस्थापकमाह। यत् मन्त्राक्षरं प्रतिपर्वं अमावास्यायां पूर्णिमायां वा सत्यतपसो नाम ब्रह्मर्षेः आख्यानं दृष्टान्तं कीर्त्तयन्तो द्विजा ब्राह्मणाः प्रारम्भे कथाकथनप्रारम्भे प्रणवास्पदप्रणयितां नीत्वोच्चरन्ति प्रणवः ओंकारस्तस्यास्पदं स्थानं तत्र प्रणयः सम्बन्धः सोऽस्यास्तीति मत्वर्थीयप्रत्ययानन्तरं तद्भावस्तत्ता यदेवाक्षरं सत्यतपसो मुनेः पर्वाध्यायं श्रावयन्तो विप्राः आदौ पठन्ति तदेवाक्षरमित्यर्थः।

ओंकारः सर्व्ववैदिकपाठेषु मङ्गलार्थं तथाभीष्ट एव। यदाहुः— "ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कण्ठं भित्त्वा विनिष्क्रान्तौ तेनोभौ मङ्गलाविमौ ॥ १ ॥" अतो यत्र पाठे ईकारोप्यस्ति तत्पाठश्चायम् ईं इह हिमवतः उत्तरेषु पादेषु पुष्पभद्रा नाम नदी तस्यास्तीरे पुष्पभद्रो नाम वटस्तत्र सत्यतपा नाम ऋषिस्तपोऽतप्यत। एतदक्षरोच्चारणे च तस्य महर्षेरमुं हेतुमाहुः प्राचीना मुनयः। तस्य किल महर्षेः कानने निराहारं तपःसमाचरतो निष्ठुरतरशरप्रहारभरजर्ज्जरीकृतकलेवरं चीत्कारबधिरितदिगन्तरमेकं वराहमालोक्य परमकारुण्यात्तत्कालसंक्रान्तयेव तत्पीडया मुखकमलात् इं इत्यक्षरं विनिर्गतमनन्तरं तत्पृष्ठत एवागतेनाधिज्यकाम्मुकेण व्याधेन पृष्टम् भगवन् ! मदीयनाराचहतः शूकरः केन

वर्त्मना गतः पीड्यते बुभुक्षया मत्कुटुम्बं तत्तं निवेदय दयानिधे ! न दृष्ट इति कथनेऽसत्यभाषणं सत्यकथने च परपीडा तदेवं विरुद्धमापतितमिति चिन्तासन्तप्तस्य व्याकुलितस्य परलोकभीरोर्मुनेः ईंकाररूपसारस्वतबीजोच्चारणमात्रसन्तुष्टा भगवती सरस्वती मुखेऽवतीर्य्य सत्यं हितं वचनमुच्चचार। तद्यथा—"या पश्यति न सा ब्रूते या ब्रूते सा न पश्यति॥ अहो व्याध स्वकार्य्यार्थिन्किम्पृच्छसि मुहुर्मुहुः॥ १॥" एतत्सम्प्रदाया ब्राह्मणा अद्यापि पर्वाध्यायादौ सारस्वतं परमम् 'ई' इत्यक्षरमुच्चारयन्ति सानुनासिकमित्यर्थः॥ ४॥

यत्सद्योवचसाम्प्रवृत्तिकरणे दृष्टप्रभावं बुधै-
स्तार्त्तीयं तदहं नमामि मनसा तद्बीजमिन्दुप्रभम्।
अस्त्वौर्वोपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गौः शब्दो गिरि वर्त्तते सुनियतं योगं विना सिद्धिदः॥५॥

तृतीयबीजेऽप्यशेषाम्नायानुप्रवेशमाह-यदिति। तार्त्तीयं तृतीयम् इन्दुप्रभं शशांकधवलं तत् पूर्वनिर्दिष्टं बीजं ह्सौ इतिरूपं बीजाक्षरम् अहं नमामि यत् बीजं वाचाम्प्रवृत्तिकरणे वचनपाटवकरणे बुधैः सुचेतनैः सद्योदृष्टप्रभावं तत्क्षणालोकितोल्लसत्प्रत्ययम्। एकाक्षरमपि त्रैपुरं तृतीयं बीजं चन्द्रशुभ्रं ध्यातं सत् परमसारस्वतमित्यर्थः। यदि वा अहमिति न विद्यते हकारो यत्र तदहं हकाररहितम्। सौं एतदपि शारदं बीजं ज्ञेयम्। तदुक्तम् "जीवं दक्षिणकर्णेन वाचया च समन्वितम्॥ एतत्सारस्वतं बीजं सद्योवचनकारकम्॥१॥ जीवं सकारः। दक्षिणकर्णः औकारः। वाचा विसर्गः- इत्यादिसञ्ज्ञकाः कौलमातृकातो ज्ञातव्याः। उत्तरार्द्धेन सप्रभावं त्रैपुरं बीजान्तरमाह। और्वोऽपि वडबानलोऽपि सरस्वतीं नाम नदीम् अनुगतो मिलितो जाड्याम्बुविच्छित्तये जाड्यजलसंशोषणाय अस्तु स्यात्। तत्त्वन्तु अस्त्वौरिति अस्-तु-औः इति पदत्रयम्। न विद्यते सकारो यत्र तत् अस् सकारवर्जितम्। तु पुनरर्थे तेन औः इति केवलं सिद्धम्। एतदपि बीजान्तरं ज्ञेयम्। ततश्च वो युष्माकं सरस्वतीमनुगतः सारस्वतबीजताम्प्राप्तः औरिति जाड्याम्बुविच्छित्तये अस्तु भवतु इति व्याख्येयम्। अयमभिप्रायः-यथा किल सरस्वतीसाम्यान्नदीसम्पर्क्काद्वड़वाग्निरपि जाड्यं छिनत्ति तथेदमप्यक्षरंसारस्वतंबीजं, सारस्वतबीजत्वादज्ञानमुद्रापहारकम्-इत्युक्तोऽयं न्यासः। एतस्यावस्थापकमाह-गौरिति। गौः शब्दःगिरि

वाण्यां वर्त्तते "स्वर्गे दिशि पशौ रश्मौ वज्रे भूम्नि विषे गिरि॥ विनायके जले नेत्रे गौः शब्दःपरिकीर्तितः॥१॥" इत्यनेकार्थवचनात्। स गौः शब्दो योगं विना ध्यानं विना नियतं निश्चयेन सिद्धिदः सारस्वतसिद्धिप्रदः। मम मतं चेदमर्थम्। यो गौः शब्दः गं गकारं विना सिद्धिदः, तथा औः इत्यवशिष्यते च इदम् औः इति बीजाक्षरं योगं होमध्यानकुसुमजापक्रियां विनापि फलतीत्यावृत्त्या व्याख्यातं ज्ञेयम्। अस्मिन् पद्यद्वयेऽपि एकमेव बीजाक्षरं बीजपदमुक्तमिति न पुनरुक्तमाशङ्क्यम्। यतोऽस्त्वौरिति सविसर्गं सानुनासिकञ्च बीजं सौः इतरत् सविसर्गमित्ययं विशेष इत्यर्थः॥ ५॥

एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं।
कूटस्थं यदि वा पृथक्क्रमगतं यद्वा स्थितं व्युत्क्रमात्॥
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं।
जप्तं वा सफलीकरोति तरसा तं तं समस्तं नृणाम्॥६॥

एकैकमिति। हे देवि भगवति! एकैकम् एकमेकम् अनघं निर्दूषणं तव बीजं मंत्राक्षरं यं यं कामम् अभीष्टार्थम् अपेक्ष्य आश्रित्य येन केनापि विधिना चिन्तितं स्मृतं जप्तं वा पौनःपुन्येन चिन्तितं सदिदं बीजं नृणां ध्यातृपुरुषाणां तं तं समस्तं मनोरथं तरसा वेगेन सफलीकरोति पूरयति। बीजप्रकारबाहुल्येन विशेषणान्याह-सव्यञ्जनाव्यञ्जनं सह व्यञ्जनेन वर्णेन वर्त्तत इति सव्यञ्जनं स्वरमयं ततः समाहारद्वन्द्वस्तत्र मूलाम्नायरूपः। अव्यञ्जनं च। ऐ,ई औ इति बीजपदान्येतान्यपि रहस्यरूपाणि ज्ञेयानि यदाह त्रिपुरासारे-शिवाष्टमं केवलमादिबीजं भगस्य पूर्वाष्टमबीजमन्यत्। परं शिरोऽन्तः कथिता त्रिवर्णा संकेतविद्या गुरुवक्त्रगम्या॥१॥ तथा कूटस्थम् अनेकसंयोगाक्षरबीजं यथा-ह्सैं-ह्स्क्लीं-ह्सौं-महात्रिपुर-भैरवीं नमः। पट्टे कुंकुमगोरोचनाचन्दनकर्पूरैर्मन्त्रं लिखित्वा बद्धस्य नाम उपरि बन्धकस्य त्वधो दत्त्वा रक्तपुष्पैरष्टदिनपर्य्यन्तमष्टोत्तरशत १०८ जपाद् बन्दीमोक्षः। यदि वा भूर्ज्जपत्रे लिखित्वा दिनत्रयं रक्तपुष्पैरष्टोत्तरशतं १०८ जपं कृत्वा बद्धवस्त्रांचले बन्धयेदवश्यं मोक्ष इति। यदि वा पृथक् एकैकं बीजं न च मिलितं बीजत्रयमेव सारस्वतं किन्त्वेकाक्षरमतिरहस्यम्। यदाहुः श्रीपूज्यपादशिष्याः—"कान्तादिभूतपदगैकगता-

र्द्धचन्द्रं दन्तान्तपूर्वं जलधिस्थितिवर्णयुक्तम् ॥ एतज्जपन्नरवरो भुवि वाग्भवाख्यं वाचां सुधारसमुचां लभते स सिद्धिम् ॥१॥

"कान्तान्तं कुलपूर्व्वपञ्चमयुतं नेत्रान्तदण्डान्वितं कामाख्यं गदितञ्च जन्म तुरयं साक्षाज्जगत्क्षोभकम् ॥ दन्तान्तेन युतं तु दण्डिसकलं संक्षोभणाख्यं कुलं सिद्धं तस्य गुणाष्टकं खचरतासिद्धिश्च नित्यं जपात् ॥२॥" इत्यपि केषुचित्पुस्तकेषु पाठो दृश्यते ।

अन्यच्च क्रमगतं क्रमेण परिपाट्या लोकप्रसिद्धया शिव—शक्तिसंयोगरूपया स्थितं यथा—ह्सैं—ह्स्क्लीं—ह्सौं इति । यद्वा व्युत्क्रमात् वैपरीत्येन विपरीतरताभियोगेन स्थितं शक्त्याक्रान्तं शिवबीजमित्यर्थः । यथा स्हैं-स्ह्क्लीं स्ह्सौं इति । यदाहुः श्रीजिनप्रभसूरिपादा रहस्ये-पुंसो वश्यार्थे शिवाक्रान्तं शक्तिबीजं रक्तध्यानेन जपेत् । स्त्रियास्तु वश्यार्थं शक्त्याक्रान्तं शिवबीजं ध्यायेदिति । त्रिपुरासारेऽप्याह "शिवशक्तिबीजमत एव शम्भुना निहितं द्वयोरुपरि पूर्व्वबीजयोः । अकुलं च परोपरि च मध्यमाधारे दहनं ततःप्रभृति सोर्जिता भवेत् ॥ भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्व्वा । सैव शीघ्रफलदा भुवि विद्या पश्यते पशुजनेष्वपि गोप्या ॥" किञ्च क्रमव्युत्क्रमौ, क्रमो यथा ऐं–क्लीं–सौं, व्युत्क्रमो यथा ऐं-सौं-क्लीं, क्लीं-ऐं-सौं । क्लीं सौं ऐं । सौं ऐं क्लीं । सौं क्लीं ऐं । इत्यमुना प्रकारेण क्रमव्युत्क्रमयोः प्रकारान्तरमुच्यते । यथा क्रमो वाग्बीज-कामबीज-प्रेतबीजक्रमेण, व्युत्क्रमस्तु वाक्प्रेतकामबीजक्रमेण । वा प्रेतवाक्कामबीजक्रमेण । वा प्रेतकामवाग्बीजक्रमेण । वा कामवाक्प्रेतबीजक्रमेण । वा कामप्रेतवाग्बीजक्रमेण । यदुक्तम्पूज्यैः- "आद्यं बीजं मध्यमे मध्यमादावन्त्यं चादौ योजयित्वा जपेद्यः ॥ त्रैलोक्यान्तःपातिनो भूतसङ्घा वश्यास्तस्यैश्वर्य्यभाजो भवेयुः ॥ १ ॥ आद्यं कृत्वा चावसानेऽन्त्यबीजं मध्ये मध्यं चादिमे साधकेन्द्रः ॥ सद्यः कुर्य्याद्यो जपन् पापमुक्तो जीवन्मुक्तः सोऽश्नुते दिव्यसिद्धिम् ॥ २॥ " इत्यादि । सर्व्वबीजलभ्यविशेषफलानि तत्तद्ग्रन्थेभ्यो ज्ञेयान्यत एवोक्तम्—यं यं कामं वश्याकृष्टिपौष्टिकस्तम्भनमोहनवशीकरणमारणोच्चाटन—शान्त्यादिकं ध्याताभिप्रैति, एषां बीजानाम्प्रभावात् सर्व्वं सफलीभवती—त्यर्थः ॥ ६ ॥

वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम्।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥७॥

अथ प्रस्तुतसारस्वतसिद्ध्यर्थं ध्येयविभागमाह-वाम इति-वामे करे पुस्तकधारिणीं द्वितीये च वामकरे अभयदां सर्व्वजीवाभयप्रदानदक्षां तथा दक्षिणे पाणौ साक्षस्रजम् अक्षस्रजा जपमालया सहवर्त्तते तथोक्ता द्वितीयदक्षिणे करे वरदानपेशलकरां कविर्भव वाग्मी भव लक्ष्मीवान् भवेत्यादिवरदानदुर्ललितां, केभ्यः भक्तेभ्यः निजसेवकेभ्यः, कर्पूरकुन्दोज्ज्वलां घनसारकुन्दपुष्पोज्ज्वलां त्वां हे अम्ब मातः! ये पुरुषाः मनसा चित्तशुद्ध्या न शीलयन्ति नाराधयन्ति तेषां कवित्वं कुतः, त्वत्प्रसादापेक्षिणी कवित्वशक्तिरिति। पुनस्तामेव विशेषयन्नाह-उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीम् इति उज्जृम्भं विकसितं यदम्बुजं कमलं तस्य पत्रं पर्णं तद्वत् कान्ते शुभ्रत्वविशालत्वगुणवर्ये ये नयने नेत्रे तयोः स्निग्धा विशेषदीप्ता या प्रभा कान्तिस्तया लोकत इत्येवंशीला ताम्। प्रसन्नदृष्टिता ह्यासन्नेष्टदानप्रसन्नाभिमुखीभावलिङ्गम्। यदुक्तम्मागधीभाषायाम-"रुद्धसखरा दिट्ठी उत्पलधवला पसन्नचित्तास्यं॥ कुवि अस्स उमिला यइ गंतुमिणस्स सिया होई ॥१॥" इति चतुर्भुजत्वाद् भगवत्याः पुस्तकाभयदाक्षमालावरदकरत्वं युक्तम्, एवम्भूता भगवती कवित्वसिद्धये ध्यातव्येत्यर्थः ॥७॥

ये त्वाम्पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभां
सिञ्चन्तीममृतद्रवैरिव शिरो ध्यायन्ति मूर्ध्नि स्थिताम्
अश्रान्तं विकटस्फुटाक्षरपदा निर्य्याति वक्त्राम्बुजा—
त्तेषाम्भारति भारती सुरसरित्कल्लोललोलोर्म्मिवत् ॥ ८ ॥

निरंकुशवक्तृत्वशक्तये विशेषोपदेशमाह-य इति। हे भारति ! पाण्डुरपुण्डरीकपटलस्पष्टाभिरामप्रभाम् श्वेतकमलराशिदीप्तमनोज्ञकान्तिम्। अमृत-

द्रवैरिव सुधारसैरिव शिरः मस्तकं सिञ्चन्तीम्। मूर्ध्नि स्थितां मस्तकोपरि छत्रमिव स्थिताम् त्वाम् ये पुरुषाः ध्यायन्ति स्मरन्ति तेषां वक्त्राम्बुजात् मुखकमलात् अश्रान्तं निरन्तरं भारती वाणी निर्य्याति निस्सरति। किंरूपा, विकटस्फुटाक्षर-पदा विकटान्युदाराणि स्फुटानि प्रकटान्यक्षराणि येष्वेवम्भूतानि पदानि वाक्यरचना यस्यां सा तथोक्ता। सालङ्कारा सुललितविदग्धस्पृहणीया गीरुल्लसति। कथमित्याह–सुरसरित्कल्लोललोलोर्मिवत्। सुरसरित् गङ्गा तस्याः कल्लोलाः नीरसम्भारोल्लासिन्यो लहर्य्यस्तद्वल्लोलाश्चञ्चला ऊर्मयः सावर्त्तपयः-प्रवाहरूपास्तद्वत्। भीमकान्तगुणवत्त्वात् केचित्तर्क्कादिवचनोपन्यासाः कल्लोलैरुपमीयन्ते। शान्तधर्म्मशास्त्रोपदेशाश्चोर्म्मिभिरित्येकार्थपदद्वयोपादानम्। सततक्षरदमृतबिन्दुशतसहस्रात् स्वात्मध्यानात् परमा कवित्ववक्तृत्वशक्तिरिति पूर्व्वकाव्याद्विशेषः। वक्त्राम्बुजादित्यत्र जातिव्यपेक्षयैकवचनमित्यर्थः॥ ८॥

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमा-
मुर्व्वीञ्चापि विलीनयावकरसप्रस्तारमग्नामिव।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्रान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति स्त्रियः॥ ९॥

धर्म्मपुरुषार्थमुक्त्वा कामपुरुषार्थसिद्ध्यर्थं ध्यानविशेषमाह-य इति। हे भगवति! त्वत्तेजसा तव शरीरकान्त्या ये ध्यातारः क्षणम् अपि क्षणमात्रमपि अनन्यमनसः एकाग्रचित्ताः सन्तः इमां द्यां सिन्दूरपरागपुञ्जपिहितां पश्यन्ति इदमाकाशं सिन्दूररेणुपटलव्याप्तं ध्यानभङ्ग्या प्रत्यक्षमिव विलोकयन्ति। उर्वीञ्च पृथ्वीं च विलीनयावकरसप्रस्तारमग्नामिव विगलदलक्तबिन्दुमेदुरामिव पश्यन्ति। अनन्यमनस इति पदमुभयत्रापि डमरुकमणिन्यायेन योज्यम्। तेषांकामरसिकानाम् अनङ्गज्वरक्रान्ताः कन्दर्पार्तिपीडिताः। त्रस्तकुरंगशावकदृशो वित्रस्तमृगार्भकचञ्चलदृष्टयः स्त्रियो नायिकाः वश्या भवन्ति रागपरवशा जायन्ते। भगवतीरूपमात्रस्मरणाधिरूढध्यानपरमकोटिसटङ्केन शक्तिभेद इत्यर्थः। यदुक्तं कामरूपपञ्चाशिकायां मागधीभाषया–"सिन्दूरारुणतेयं जे जं चिन्तेइ तरणिसंकाशम्॥ तडितरलतेयभासं आणाइ दूरवियो नारी॥१॥ सिन्दूरारुण-तेयन्तिकोणं बंभगं तिमब्भत्थम्॥ जाणो णव कुणई वस्सं अमरसिद्धिसङ्घा-

यम् ॥ २ ॥" अन्यत्राप्युक्तम्-"पीतं स्तम्भेऽरुणं वश्ये क्षोभणे विद्रुमप्रभम् ॥ अभिचारेऽञ्जनाकारं विद्वेषे धूमधूसरम्" इत्यर्थः ॥ ९ ॥

चञ्चत्काञ्चनकुण्डलांगदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि त्वद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम् ।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्यं भजन्ति श्रियः ॥ १० ॥

अर्थसारत्वज्जगतोऽतः पुरुषार्थसारामर्थसिद्धिमाह-चञ्चदिति । हे भगवति! ये पुमांसः क्षणमपि निमेषमात्रमपि त्वद्गते चेतसि त्वन्मये चित्ते चञ्चत्काञ्चनकुण्डलाङ्गदधराम् देदीप्यमानसौवर्णकुण्डलबाहुरक्षकाम् । तथा आबद्धकाञ्चीस्रजं निबद्धमेखलां देवीं भगवतीं त्वां स्थिरां कृत्वा स्थिरतया निवेश्य ध्यायन्ति स्वात्मानं तन्मयतया स्मरन्ति तेषां निस्तुषभागधेयानां वेश्मसु गृहेषु विभ्रमात् औत्सुक्येन अहरहः दिनेदिने स्फारीभवन्त्यः विस्तारं प्राप्नुवन्त्यः उत्तरोत्तरं बर्द्धमानाः माद्यत्कुञ्जरकर्णतालतरलाः मदोन्मत्तगजकर्णचञ्चलाः श्रियो लक्ष्म्यः चिरं चिरकालं स्थैर्यं भजन्ति स्थिरीभूय तिष्ठन्ति । पीतध्यानस्य लक्ष्मीमूलत्वात्, यदुक्तं मागधीभाषायाम्-"अलहालपत्ते पसिहिण। कालानलपुञ्जकोटिसारित्थम् ॥ झाइज्जना सगोपा विज्जइ सायसारिही ॥ १ ॥ बंभकुडिये कुम्भोपीडिज्जविकाणसंकाशो ॥ थंभई उलजलण तुरंगमऽगपंचकंभावि दोनूणम् ॥ २ ॥" अतस्तप्तकाञ्चनसत्त्वस्य ध्यानान्निरवधिनिधिसमृद्धिभाजनं ध्याता भवतीत्यर्थः ॥ १० ॥

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुंगस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं त्वद्रूपसंवित्तये ॥ ११ ॥

ध्येयध्यानतादूप्यमाह-आर्भट्येति । शशिखण्डमण्डितजटाजूटाम् चन्द्रकलालंकृतमौलिं नृमुण्डस्रजं कपालमालाधारिणीं बन्धूकप्रसवारुणाम्बरधरां जपापुष्परक्तवस्त्रां चतुर्भुजां बाहुचतुष्टयवतीं त्रिनेत्रां त्रिलोचनाम् । आपीनतुङ्ग-

स्तनीं समन्तात्पृथुलोच्चकुचाम्, मध्ये नाभेरधो निम्नवलित्रयाङ्कितनु चञ्चत्त्रि वलितरङ्गां त्वां भगवतीं त्वद्रूपसंवित्तये ध्यायन्ति। सर्व्वसिद्धिमयत्वद्रूपप्राप्तये त्वामेव स्मरन्ति योगिन इति शेषः। पुनः किम्भूताम्, प्रेतासनाध्यासिनीं प्रेतासनं ह्सौं इति बीजं तदध्यास्ते। ताच्छील्ये णिनिः। यदाह देवीजन्मपटले त्रिपुरासारे—"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः॥ पञ्चैते च महाप्रेताः पादमूलतले स्थिताः॥ १॥ तत्कर्णिकोपरि कपञ्चमतुर्य्ययुक्तानुस्वारमम्बुजत—दन्तयुतं निधाय॥ प्रेताधिपां तदुपरि त्रिदशैकवन्द्यां ध्यायेत् त्रिलोकजननीं त्रिपुराभिधां ताम्॥ २॥"। कथं स्मरन्तीत्याह-आर्भटया उद्धतया वृत्त्या। भारतीसात्वतीकौशिकीप्रमुखवृत्तयो हि शान्ताः। आर्भटी वृत्तिस्तु वीररसाश्रया। यदाह सरस्वतीकण्ठाभरणालङ्कारे भोजराजः—"कौशिक्यारभटी चैव भारती सात्वती परा॥ मध्यमारभटी चैव तथा मध्यमकौशिकी॥ १॥ सुकुमारार्थसंदर्भा कौशिकी तासु कथ्यते॥ या तु प्रौढार्थसन्दर्भा वृत्तिरारभटी तु सा॥ २॥ कोमला प्रौढसन्दर्भा कोमलार्था च भारती॥ प्रौढार्था कोमला प्रौढसन्दर्भा सात्वतीं विदुः॥ ३॥ कोमलैः प्रौढसन्दर्भबन्धैर्मध्यमकौशिकी। प्रौढार्था कोमले बन्धे मध्यमारभटीष्यते॥ ४॥" उदाहरणानि तत एवावगन्तव्यानि। आर्भटी आरभटी इति शब्दयोर्मध्ये विशेषस्तु वर्षा-वरषादिशब्दवत्। अत आर्भटीत्युच्चारणे न दोषः। अतः सोद्धतजापेन भगवत्या निर्म्मलस्फटिकसङ्काशरूपस्य ध्यानी मनीषितां सिद्धिं लभते। न च मुत्कलनिःशङ्कचित्तस्य ध्यातुर्दुष्करं किमपि, यदुक्तं मागधीभाषायाम्—"चित्ते बद्धे बद्धो मुक्कोय नत्थी सन्देहो॥ त्रिमलसहाउअप्यामईलिज्ज इमभि ए चित्ते॥ १॥" इत्यर्थः॥ ११॥

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निश्शेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः।
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभव—
द्देवि त्वच्चरणाम्बुजप्रणतिजः सोऽयम्प्रसादोदयः॥ १२॥

अमुमेवार्थं दृष्टान्तेन दर्शयन्नाह--जात इति। हे देवि! अल्पपरिच्छदे स्तोकपरिवारे सामान्यमात्रे अनुत्कटे राज्ञां कुले क्षितिभुजां वंशे जातोऽपि

लब्धजन्मापि श्रीवत्सराजः अयं सामान्यनृपः यद् यस्मात्कारणात् निश्शेषावनिचक्रवर्त्तिपदवीं लब्ध्वा अखण्डमहीमण्डलसार्व्वभौमपदवीं प्राप्य प्रतापोन्नतः शत्रूच्छेदकृत् कीर्त्तिश्रेयस्करस्तथा विद्याधरवृन्दवन्दितपदः खेचरचक्रचर्च्चितचरणः अभवत् बभूव, सोऽयं सर्व्वोऽप्ययं प्रसादोदयः त्वच्चरणाम्बुजप्रणतिजः तव पादकमलनमस्कारसम्भूतोऽनुभावोऽयम्। किलायं श्रीवत्सराजनामा सामान्यनृपोऽपि यदकस्मादनेकनरनायकमुकुटकोटितटघृष्टपादो जातः। स निश्चितं पूर्वकाव्योक्तव्यक्तभगवतीरूपानुध्यानसम्भव एव प्रसादातिशय इति भावार्थः॥१२॥

**चण्डि त्वच्चरणाम्बुजार्च्चनकृते बिल्वीदलोल्लुण्ठनात्**
**त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः।**
**ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितै-**
**र्जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः॥ १३॥**

भगवत्या एव माहात्म्यमाह-चण्डीति। हे चण्डि श्रीभगवति! त्वच्चरणाम्बुजार्च्चनकृते तव पादकमलपूजार्थे येषां पुरुषाणां कराः हस्ताः बिल्वीदलोल्लुण्ठनात् बिल्वपत्रत्रोटनात् त्रुट्यत्कण्टककोटिभिः लग्नकण्टकाग्रैः परिचयं सम्पर्कं न जग्मुः न गताः ते पुमांसः दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितैः—एतल्लक्षणलक्षितैः अम्भोजप्रभैः पाणिभिः कमलसदृशकोमलकरैरुपलक्षिताः पृथिवीभुजः नरेन्द्राः कथमिव जायन्ते। ये श्रीफलधत्तूरतुलसीपत्रादिभिर्भगवतीं नार्च्चयन्ति ते कथं यथोक्तलक्षणा राजानो भवन्तीत्यर्थः। तत्र दण्डो गदा, चापं धनुः, कुलिशं वज्रं, श्रीवत्सो हि हृदयचिह्नम्, अङ्कुशचक्रमत्स्याः प्रसिद्धाः, एतानि लक्षणानि सार्व्वभौमानामेव भवन्ति। यदुक्तं सामुद्रिके—"पद्मवज्राङ्कुशच्छत्रशङ्खमत्स्यादयस्तले॥ पाणिपादेषु दृश्यन्ते यस्यासौ श्रीपतिः पुमान्॥ १॥" इत्यादि ज्ञेयम्। पूजां विना च न प्रौढसमृद्धिः। यदुक्तं महादेवपूजाष्टके—"पूजया विपुलं राज्यमग्निकार्येण सम्पदः" इति, 'न पूजावर्जितं सौख्यम्' इति प्रथमकाव्येऽभिभणनाच्च। चण्डीत्यामन्त्रणं न सुखाराध्या भगवतीति रौद्रशब्दोपादानमित्यर्थः॥ १३॥

विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-
स्त्वां देवि त्रिपुरे परापरकलां सन्तर्प्य पूजाविधौ ।
यां याम्प्रार्थयते नरः स्थिरधियां येषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥१४॥

पूजाफलमुक्त्वा होमफलमाह—विप्रा इति । हे देवि हे त्रिपुरे ! विप्राः ब्राह्मणाः; क्षोणिभुजः क्षत्रियाः, विशः वैश्याः, तदितरे शूद्राः; अमी चातुर्वर्ण्य-लोकाः परापरकलां पराचीनावर्चीनावस्थामयीं त्वां भगवतीं पूजाविधौ पूजावसरे क्षीराज्यमध्वासवैः दुग्धघृतमाक्षिकैक्षवैः सन्तर्प्य प्रीणयित्वा त एव ब्राह्मणक्षत्रियादयः तरसा बलेन विघ्नैरविघ्नीकृताः उपद्रवैरबाधिताः सन्तः तां तां मनीषितां वश्याकृष्टिराज्यादिकां सिद्धिं लब्धिं ध्रुवं निश्चयेन अवाप्नुवन्ति लभन्ते, यां यां सिद्धिं स्थिरधियां तदेकाग्रचित्तानां तेषां ध्यातॄणां मनः चित्तं प्रार्थयते अभिलषति तामेव सिद्धिं लभन्त इत्यन्वयः । अयं भावः ये किल षट्-कोणे चतुष्कोणे वा वृत्तेऽर्द्धचन्द्राकारेऽन्याकारे वा हस्तोर्ध्वे कुण्डे शोधनं क्षालनं पावनं शोषणञ्च कृत्वा परितो हरशक्रादीन् देवान् न्यस्य मध्ये कुशाम्भसाभ्युक्ष्य पुष्पगन्धाद्यैः सम्पूज्य तत्र परदेवतां ध्यात्वा सूर्य्यकान्तादरणिकाष्ठाच्छ्रोत्रियागाराद्वा वह्निमाहृत्य हैमे शौल्बे मृन्मये वा पात्रे निधाय वह्निं प्रतिष्ठामन्त्रेण न्यस्य हृदयमन्त्रेण सप्त घृताहुतीर्दत्त्वा कार्य्यानुसारेण रक्तातिरक्ता कनकाहिरण्याद्याः सप्त जिह्वाः परिकल्प्य सम्प्रोक्षणमन्त्रशुभं वर्णावर्त्तशब्दादिकं विचारयन्तः पूर्णाहुतिपर्य्यन्तं दक्षिणभागस्थदधिदुग्धादीनां चुलुकं चुलुकं जुह्वति, तेषां प्रीता भगवती सर्व्वसिद्धिं सम्पादयति । अग्निप्रतिष्ठामन्त्रश्चायम्— "मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञं समिमं दधातु विश्वेदेवास इह मादयन्तामोंप्रतिष्ठा" इति । विस्तरस्त्वस्य गुरुमुखाज्ज्ञेय इत्यर्थः ॥ १४ ॥

शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम् ।
लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५ ॥

अथ भगवत्या एव सर्व्ववाङ्मयत्वं सर्व्वदैवतमयत्वञ्चाह-शब्दानामिति । हे भगवति त्रिपुरे ! अत्र भुवने चतुर्दशात्मके शब्दानां रूढयौगिकादिभेदभिन्नानां नाम्नां जननी उत्पादयित्री त्वमसि । अतस्त्वं वाग्वादिनी इति वाचो वाणीर्वदतीत्येवंशीलेति उच्यसे कथ्यसे,एतावता सर्व्वशास्त्राणि त्रिपुरातः प्रादुर्भूतानि ज्ञेयानि न तु यथा बौद्धानाम्। "तस्मिन्ध्यानसमापन्ने चिन्तारत्नवदास्थिते । निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ १ ॥" इत्यादि । अतो वेदसिद्धांतव्याकरणालङ्कारकाव्यादिशास्त्राणि भगवतीरूपाण्येवेति । अन्यच्च ध्रुवं निश्चितं केशववासवप्रभृतयोपि हरिहरब्रह्मप्रमुखाः इन्द्रयमवरुणकुबेराग्निनैर्ऋत्यवाय्वीशानप्रमुखाश्चापि देवास्त्वत्तः प्रादुर्भवन्ति, भगवत्याः सकाशादेवामी देवा उत्पद्यंत इत्यर्थः । सृष्टिवृष्टिपालनज्वालनज्ञानदानबीजाधानादितत्तद्विधेयकार्य्याणां भगवत्या एवोत्पादकत्वात् तेऽपि तन्मया एवेति तथा कल्पविरमे क्षयकाले तेऽमी ब्रह्मादयोपि जगदुत्पत्तिस्थितिनाशक्षमा अपि यत्र भगवत्यां लीयन्ते । युगान्ते हि सर्व्वद्रव्याधारप्रलयलीलायाः त्वय्येवावस्थानात् सर्व्वेऽपि देवा महामायास्वरूपां त्वामेवानुप्रविशन्ति । उपसंहारमाह–सा पूर्व्वोक्तस्वरूपा काचित् वर्णयितुमशक्या अचिन्त्यरूपमहिमा अलक्ष्यरूपप्रभावा त्वं परा शक्तिः गीयसे कथ्यसे, योगिभिरिति शेषः । ननु शक्तेरपि शिवात्मकत्वात्तन्नाशे तस्या अपि नाश इति चेन्न, शिवव्यतिरिक्तायाः शक्तेः परमार्थमयत्वात्। यदुक्तं मागधीभाषायाम्—"शिवशक्तिहि मेलावडोऊ इहुपशुवाई होई ॥ भिन्नी शक्ति शिवाह विष्णु विरलो बुज्झई कोई ॥ १ ॥" इति गर्भार्थसन्दर्भितार्थः ॥ १५ ॥

देवानां त्रितयी त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा—
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।
यत्किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गादिकं
तत्सर्व्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥१६॥

त्रिपुरेतिनामप्रत्ययेन सर्व्वत्र्यात्मकवस्तूनां भगवत्या सह साम्यमाह-देवानामिति । देवानां ब्रह्मविष्णुमहेश्वराणां त्रितयी त्रिसंख्यात्मकता । यदि वा देवशब्देन गुरवस्तेषां त्रितयं गुरुपरमगुरुपरमेष्ठिगुरुरूपम् तथा हुतभुजां वैश्वानराणां त्रयी गार्हपत्यदक्षिणाग्न्याहवनीयाख्यास्त्रयोऽग्नयः, त्रीणि ज्योतींषि

वा हृदयललाटशिरःस्थितानि, शक्तित्रयम् इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिरूपम् । यद्वा-ब्राह्मीमाहेश्वरीवैष्णवीति शक्तित्रयम् । त्रिस्वराः उदात्तानुदात्तस्वरिताख्याः । यद्वा —अकारेकारबिन्दुरूपास्त्रयः स्वराः । यद्यपि व्याकरणे चतुर्दश स्वरास्तथाप्यागमे षोडशस्वरत्वम् । यथोत्तरषट्के—षोडशस्वरं महापद्ममित्युक्त्वा प्रथमे स्वरसङ्घातमित्युक्ते त्रय एव स्वराः । त्रैलोक्यं स्वर्गमर्त्यपातालरूपम् । यदि वा मूलाधारस्वाधिष्ठानमणिपूरकमित्येको लोकः, अनाहतनिरोधविशुद्धिरिति द्वितीयः, आज्ञाशीर्षब्रह्मस्थानमिति तृतीय इति त्रैलोक्यं ज्ञेयम् । त्रिपदी जालन्धरकामरूपोड्डीयानपीठरूपा यदि वा गगनानन्दपरमानन्दकमलानन्दा इति नादत्रयम् । त्रिपदी गायत्री वा । त्रिपुष्करं शिरोहृदयनाभिकमलरूपम्, तीर्थत्रयं वा । त्रिब्रह्म इडापिङ्गलासुषुम्णारूपम् । यदि वा अतीतानागतवर्त्तमानज्ञानप्रकाशकं हृद्व्योमब्रह्मरन्ध्रान्तं ब्रह्मत्रिकम् । वर्णास्त्रयः-ब्राह्मणादयः । वाग्भवं कामराजं शक्तिबीजञ्चेति मूलमंत्र एव वर्णत्रयं वा, तन्मयत्वाद्वाङ्मयस्य । उपसंहारमाह-यत् किञ्चित् जगति संसारे त्रिवर्गादिकं धर्म्मार्थकामरूपादिकं यत् किञ्चिल्लोके वर्त्तमानं चराचरावृत्तानावृत्तस्थूलसूक्ष्मलघुगुरुकठिनकोमलनीचोच्चत्र्यस्रचतुरस्राद्यनेकभेदविविधं वस्तु त्रिधा त्रिभिः प्रकारैः नियमितं निबद्धम्, हे भगवति देवि ! तत्सर्व्वं वस्तु तत्त्वतः परमार्थतः त्रिपुरेति ते तव नामनामधेयम् अन्वेति अनुगच्छति । त्रयात्मका ये भावास्ते सर्व्वे त्रिपुरानामान्तर्गता इति । यथा मतत्रयम्; मुद्रात्रयम्, वृत्तत्रयम्, सिद्धित्रयम्,-इत्याद्यखिलं भगवत्याः स्वरूपमिदमित्यर्थः ॥ १६ ॥

लक्ष्मीं राजकुले जयां रणमुखे क्षेमङ्करीमध्वनि
क्रव्यादद्विपसर्प्पभाजि शबरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजृम्भकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्ताराञ्च तोयप्लवे ॥ १७ ॥

मुग्धमतिचित्तप्रीतये किञ्चिन्नामधेयस्मरणफलमपि प्रकाशयन्नाह-लक्ष्मीमिति । हे भगवति ! भक्तजना अमीषु सप्तस्थानेषु भवत्याः सप्त नामानि स्मृत्वा विपदस्तरन्ति इति सम्बन्धः । यथा राजकुले भूपतिद्वारप्रवेशे लक्ष्मीं कमलां

नवयौवनां विचित्राभरणमालाधारिणीं छत्रचामरादिताद्दशासदृशविभूतिमयीं तप्तस्वर्णसवर्णां भगवतीं स्मृत्वा तन्मनीभावभाजो राजवधबन्धापराधमहाव्याधिभ्यो मुच्यन्ते। एवं रणमुखे जयाम्, क्रव्याद्द्विपसर्पभाजि राक्षसगजकृष्णसर्प्पादिभीषणे अध्वनि मार्गे क्षेमङ्करीम्, कान्तारदुर्गे कान्तारेण विषममार्गत्वेन दुर्गे रौद्रे गिरौ पर्व्वते शबरीम्, भूतप्रेतपिशाचजृम्भकभये समुपस्थिते महाभैरवीम्, व्यामोहे चित्तभ्रमे मतिमान्द्ये अयथार्थवस्तुज्ञाने त्रिपुरां, तोयप्लवे ताराञ्च स्मृत्वा ध्यात्वा विपदस्तत्तत्सङ्कटात् तरन्ति निस्तरन्ति, ध्यातार इति शेषः। तत्तत्कार्य्येषु साहाय्यदायिनीनां ध्येयरूपवर्णायुधसमृद्धयो मुद्राश्च गुरुपरम्परातोऽवसेया इत्यर्थः॥ १७॥

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि॥ १८॥

यद्यपि भगवत्या नव कोटयः पर्य्यायास्तथापि स्थानाशून्यार्थं योगिनीदोषविघातमन्त्रगर्भाणि कतिपयनामान्याह-मायेति। अत्र सामान्यार्थस्तावच्चतुर्विंशतिभगवतीनामानि कथितानि सन्ति तानि च पाठमात्रसिद्धानि न पुनः प्रयास इति। विशेषार्थस्तु चतुष्षष्टियोगिनीनामत्र काव्ये गूढोक्तो मन्त्रोऽप्यस्ति। तत्र मायाशब्देन मायाबीजं ह्रींकारः। मालिनीति मा लक्ष्मीस्तद्बीजं श्रींकारः। कालीति कव्यञ्जनेन सहितालीति काली तेन क्लीं इति सिद्धम्। बिन्दूच्चारणविभागो ज्ञेयः। शक्तिरिति शक्तिबीजं ह्सौं। वाग्वादिनीति वाग्बीजम् ऐंकारः, इति पञ्चबीजानि जातानि, आदौ प्रणवोन्ते च नमः। यथा-ओं ऐं ह्रीं श्रीं क्लीं ह्सौं नमः। इदं सर्व्वसामान्यं ज्ञेयम्। न्यासे पुनरयमक्षरक्रमः। एतस्याम्नायस्य पूर्व्वं सेवायां जाप्यः। अष्टोत्तरसहस्रं १००८ प्रतिदिनमष्टोत्तरशतं १०८ वा जाप्ये सुखमारोग्यं वश्यता समृद्धिर्बन्दीमोक्षश्च फलम्। ध्यानन्तु शान्ते कार्य्ये श्वेतम्, वश्ये रक्तम्, मोहने पीतम्, उच्चाटने कृष्णं ज्ञेयम्, इयन्तु योगिनीनां विद्या अतस्तत्प्रसङ्गेन योगिनीदोषविघातकयन्त्रमपि भक्तोपकाराय प्रकाश्यते। तासां नामानि चैतानि-ब्रह्माणी १, कुमारी २, वाराही ३, शाङ्करी ४, इन्द्राणी ५,

कङ्काली ६, कराली ७, काली ८, महाकाली ९, चामुण्डा १०, ज्वालामुखी ११, कामाख्या १२, कपालिनी १३, भद्रकाली १४, दुर्गा १५, अम्बिका १६, ललिता १७, गौरी १८, सुमङ्गला १९, रोहिणी २०, कपिला २१, शूलकरा २२, कुण्डलिनी २३, त्रिपुरा २४, कुरुकला २५, भैरवी २६, भद्रा २७, चन्द्रावती २८, नारसिंही २९, निरञ्जना ३०, हेमकान्ता ३१, प्रेतासना ३२, ईशानी ३३, वैश्वानरी ३४, वैष्णवी ३५, विनायकी ३६, यमघण्टा ३७, हरसिद्धिः ३८, सरस्वती ३९, शीतला ४०, चण्डी ४१, शङ्खिनी ४२, पद्मिनी ४३, चित्रिणी ४४, वारुणी ४५, नारायणी ४६, वनदेवी ४७, यमभगिनी ४८, सूर्यपुत्री ४९, सुशीतला ५०, कृष्णवाराही ५१, रक्ताक्षी ५२, कालरात्रिः ५३, आकाशी ५४, श्रेष्ठिनी ५५, जया ५६, विजया ५७, धूमवती ५८, वागीश्वरी ५९, कात्यायनी ६०, अग्निहोत्री ६१, चक्रेश्वरी ६२, महाविद्या ६३, ईश्वरी ६४, इति च। यन्त्रञ्चेदम्। तासां कुंकुमगोरोचनाभ्यां यंत्रमिदं लिखित्वा विधिवत्फलपुष्पाभ्यां

| | | | |
|---|---|---|---|
| २३ | १८ | १५ | ८ |
| ११ | १२ | १९ | २६ |
| १७ | २४ | ९ | १४ |
| १३ | १० | २१ | २० |

गन्धमुद्रानैवेद्यदीपधूपताम्बूलैः पूजां कृत्वा शुचिरेकाग्रमनाः चतुष्षष्टियोगिन्यः सर्वा अपि रुधिरामिषक्षीरसुराप्रियाः, केलिकौतूहलगीतनृत्यरताः, लघ्वीतरुणीप्रौढावृद्धाः, भ्रमराग्निस्वर्णवर्णाः, विकटोदयः, विकटदन्ताः, मुक्तकेशाः, करालजिह्वाः, अतिसूक्ष्ममधुरघर्घरोत्कृष्टनिनादाः, स्थिरचपलाः, शान्तरौद्राः, स्थूलबलवातप्रभविष्णुचतुर्भुजाः, दिव्यवस्त्राभरणाः, अंकुशकपालकर्त्रिकात्रिशूलकरवालशङ्ख—चक्रगदाकुन्तधनुराद्यायुधविभूषिताः, विष्कुम्भादिसप्तविंशतियोगैरश्विन्यादिकाष्टाविंशतिनक्षत्रैः मेषादिद्वादशराशिभिः सूर्यादिनवग्रहैर्नरसिंहवीरक्षेत्रपालमणिभद्रमहिल्लादियक्षैश्च परिवृता ध्यात्वा पूर्वोक्तमन्त्रं जपेत् योगिनीदोषोऽप्यनुयाति। "चतुष्षष्टिः समाख्याता योगिन्यः कामरूपिकाः ॥ पूजिताः प्रतिपूजान्ते भवेयुर्वरदाः सदा ॥ १ ॥" इति योगिनीचक्रमन्त्रविधानमप्यत्रान्तर्भूतमित्यर्थः ॥ १८ ॥

आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमादक्षरैः
काद्यैः क्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥ १९ ॥

निश्शेषतया त्रिपुरानामोत्पत्तिसङ्ख्यामाह—आईपल्लवितैरिति। हे त्रिपुरे भगवति! आईपल्लवितैः आकारेकारसंयुक्तनामान्तैः परस्परयुतैः अन्योन्य मिलितैः द्वित्रिक्रमादक्षरैः द्व्यादिवर्णवद्भिर्नामभिः क्रमैरित्याह। काद्यैः क्षान्तगतैः स्वरादिभिः कवर्णमादौ कृत्वा क्षकारं यावत् पञ्चत्रिंशद्वर्णैः षोडशभिः स्वरैः सह प्रत्येकं गण्यमानानि यानि नामानि भवन्ति। यथा अकाई, अखाई, अगाई, अघाई, अङाई, अक्षाई, इति यावत्। एवम् आकाई, आखाई, आगाई, आघाई-आङाई, इति यावत् आक्षाई इत्यादि अः क्षाई पर्य्यन्तानि षष्ट्यधिकानि पञ्चशतानि अङ्कतोऽपि ५६०। अथानन्तरं क्षान्तैः क्षकारपर्य्यन्तैः तैश्च ककाराद्यैश्च आईपल्लवितैः परस्परयुतैर्यानि नामानि भवन्ति यथा ककाई, कखाई, कगाई, कघाई, कङाई, कक्षाईपर्य्यन्तम्। एवं खकाई, खखाई, खगाई, खघाई, खङाई, खक्षाईपर्य्यन्तम्। एवं क्षकाई, क्षखाई, क्षगाई, क्षघाई, क्षङाई, क्षक्षाईपर्य्यन्तं पञ्चत्रिंशद्वर्णैः पञ्चत्रिंशता गुणितैर्जातानि द्वादशशतानि पञ्चविंशत्यधिकानि १२२५ इति। अन्यच्च तैरपि किंविशिष्टैः, सस्वरैः षोडशस्वरसहितैः पाश्चात्त्यनामानि कथ्यमानानि भगवतीनामसु गण्यन्त इत्यर्थः। यथा-अककाई, अकखाई, अकगाई, अकघाई, अकङाई, अकक्षाई, इति यावत्। एवम् आककाई, आकखाई, आकगाई, आकघाई, आकङाई, आकक्षाई, इति यावत्। एवं षोडशापि स्वराः पुनः खकाराद्यैः सह यथा अखकाई, अखखाई। एवम्-आखकाई, आखखाई, आखगाई, अगकाई, अगखाई, किम्बहुना यावत् अक्षकाई, अक्षखाई, आक्षकाई आक्षक्षाई,—पर्य्यन्तान्येकोनविंशतिसहस्राणि षट्शताग्राणि भवन्ति। यतो द्वादशशतानि पंचविंशत्यधिकानि षोडशस्वरैर्गुणितानि अङ्कतो १९६०० भवन्ति। सर्व्वमेलनेन षडुत्तरशताधिकानि विंशतिसहस्राणि नामानि जायन्ते। अत्र तु ग्रन्थविस्तरभयाद्दिङ्मात्रमेव दर्शितम्, अभियोगपरायणैः स्वयमभ्यूहनीयानि। प्रस्तुतमाह—हे भैरवपत्नि रुद्राणि! अनेनामन्त्रणेन तद्भार्यात्वाद्भगवत्या अप्यगाधत्वं सूचितम्। खलु निश्चयेन यानि अत्यन्तगुह्यानि मन्दधियामगम्यानि ते तव नामानि भवन्ति तेभ्यः परेभ्यः किञ्चिदधिकेभ्यः विंशतिसहस्रेभ्यो नामभ्यो नमो नमस्कारोऽस्तु। एतावद्भिः सर्व्वैरपि नामधेयैः कृतो नमस्कारो भावभक्ता त्वय्येवोपतिष्ठत इति भावार्थसङ्गभितोऽर्थः॥ १९॥

बोद्धव्या निपुणं बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्यास्त्रिपुरेत्यनन्यमनसो यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसङ्ख्याक्षरै—
र्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥ २० ॥

उक्त तत्त्वालिङ्गनापुरस्सरं निजस्तुतेः सज्जनश्लाघ्यतामाह—बोद्धव्येति । बुधैः पण्डितैः इयम् एकोनविंशतिश्लोकमयी स्तुतिः नुतिः तद्गतं मनः कृत्वा प्रणिधानेन भगवतीमयं चित्तं विधाय निपुणं यथा भवति तथा बोद्धव्या सामान्यविशेषोक्तप्रकारेण साधुभङ्ग्या ज्ञातव्या । यतो बहुधा त्रिपुराया उद्धाराः सन्ति । तथा च—"यथावस्थितमेवाद्यं द्वितीयं सहकारकम् ॥ तृतीयं हंसमारूढं त्रिपुराबीजमुत्तमम् ॥ १ ॥" तेन ऐं सृह् क्लीं—ह्स्ह्सौं इति सिद्धम् । अन्यच्च पिण्डीभूता त्रिपुरा १, कामत्रिपुरा २, त्रिपुरभैरवी ३, वाक्त्रिपुरा ४ महालक्ष्मी ५, वह्नित्रिपुरा ६, मोहिनी ७, भ्रमरावली ८, बाला ९, नन्दा १०, त्रैलोक्यस्वामिनी ११, हंसिनी १२ इति विशेषाम्नायम् अक्षरपूजायां लिखेत् । प्राधान्यं जपाभ्यासस्य न तूच्चारणस्येत्यादि सर्व्वं निपुणं बोद्धव्यम् । कस्याः स्तुतिरित्याह—त्रिपुरेति । भारत्याः त्रिपुरानाम्न्याः सरस्वत्याः । कथम्भूतायाः अनन्यमनसः असामान्यचतस्काया महामायायाः, यत्र यस्यां स्तुतौ स्फुटं प्रकटम् आद्यवृत्ते प्रथमश्लोके एकद्वित्रिपदक्रमेण त्रिभिः पदैः तत्पादसंख्याक्षरैः वर्णत्रयेण वाग्बीजकामबीजशक्तिबीजरूपेण मन्त्रोद्धारविधिः कथितः । किम्भूतः, विशेषसहितः । विशेषाश्च सहसेतिपदेन प्रथमवृत्त एव प्रकाशितत्वान्न पुनरुच्यन्ते । पुनर्विशिनष्टि—सत्सम्प्रदायान्वितः सम्प्रदायो गुरुपारम्पर्यं यथा त्रिपुराशब्देन चराचरत्रिजगदुत्पत्तिक्षेत्रं त्रिरेखामयी योनिरित्यभिधीयते, अत एवासौ त्रिपुरा इत्यादौ प्रोक्तम् । ऐकारस्य तदाकारत्वादेव । यदि वा प्रकारान्तरैरष्टदलं पद्ममालिख्य कर्णिकायां देव्या मूर्त्तिं बीजं वा पत्रेषु च लोकपालाष्टकं नाम कुलाष्टकं सिद्धयोऽष्टौ विद्या अष्टौ सिद्धयष्टकं क्षेत्रपालाष्टकं यमाष्टकं धर्म्माष्टकमित्यादि विलिख्य ह्रौं ह्रीं क्लीं क्लूं सः इति शोषणमोहनसंदीपनतापनोन्मादनपञ्चवर्णपुष्पैः योनिमुद्राधेनुपाशांकुशादिमुद्रादर्शनं पूजयेत् । ततो जापस्ततः प्रमाणानुगामि च फलमिदम् । यथा—"लक्षजापे महाविद्यावर्णमालाविभूषितः ॥ जाप्यं

करोति भूपालः साधकस्य च दासवत् ॥ १ ॥ लक्षद्वयं महाविद्याजाप्यमानो महेश्वर ॥ रक्तध्यानान्महामन्त्रः क्षोभयेच्चक्रवर्त्तिनम् ॥ २ ॥ लक्षत्रयेण देवेशो यक्षिणीनां पतिर्भवेत्। योगयुक्तो महामन्त्रो नात्र कार्य्या विचारणा ॥ ३ ॥ चतुर्लक्षं सदा जप्तैः पातालं साधकोत्तमः ॥ क्षोभयेन्नात्र सन्देहः प्रोच्यते योगिनीमते ॥ ४ ॥ पञ्चलक्षः सदा जप्तैर्निर्गच्छन्ति सुराङ्गनाः॥ पातालं स्फोटयन्त्याशु साधकस्य वशानुगाः ॥ ५ ॥ षड्भिर्लक्षैर्महादेव चिन्तितं सिद्ध्यते नृणाम्। तथा जप्तैः सप्तलक्षैर्नरो वज्राधरो भवेत् ॥ ६ ॥ अष्टलक्षैस्तथा जप्तैः फलं देवी प्रयच्छति ॥ तेन भक्षितमात्रेण कल्पस्थायी भवेन्नरः ॥ ७ ॥ नवलक्षैस्तथा जप्तैर्विद्याधरपतिर्भवेत्॥ दशलक्षैः कृतैर्जापैर्वज्रकायो भवेन्नरः ॥ ८ ॥ एकादशै रुद्रगणो द्वादशैश्च सुरोत्तमः ॥ लक्षैस्त्रयोदशैर्वीरो मायासिद्धो भविष्यति ॥ ९ ॥ चतुर्दशजपैर्लक्षैर्देवराजस्य वल्लभः ॥ आसने सेवको मंत्री गीयते देवतादिभिः ॥ १० ॥ जप्तैः पञ्चदशैर्लक्षैर्नारिकेलं प्रयच्छति ॥ साधकस्य महादेवी हृष्टा पुष्टा कुलाङ्गना ॥ ११ ॥ तेन भक्षितमात्रेण नरो ब्रह्मसमो भवेत् ॥ त्रिदशैः पूजितो नित्यं कन्याकोटिशतैस्तथा ॥ १२ ॥ जप्तैः षोडशभिर्लक्षैः साधकस्य सुरेश्वरैः ॥ योगाञ्जनं परं पट्टं कुण्डलानि प्रयच्छति ॥ १३ ॥ लक्षैः सप्तदशैर्जप्तैर्नरो धर्म्मोपमो भवेत्॥ जप्तैरष्टादशैर्लक्षैर्विष्णुरूपो भवेन्नरः॥ १४॥ एकोनविंशैर्लक्षैस्तु देवी पाशान्प्रयच्छति ॥ साधकस्तेन पाशेन बन्धयेत्ससुरासुरान् ॥ १५ ॥ एवं क्रमेण कश्चित्तु कोट्यर्द्धं कुरुते जपम् ॥ होमयेच्च दशांशेन दुग्धाज्यं गुग्गुलं मधु ॥ १६ ॥ योन्याकारे महाकुण्डे रक्ताभरणभूषितः ॥ स मन्त्री विधिसंयुक्तो देवराजो भविष्यति ॥ १७ ॥ कोटिजाप्ये कृते मन्त्री लीयते परमम्पदम् ॥ एवं जापक्रमः प्रोक्तो होमयुक्तो महाफलः॥ १८ ॥" इत्यादि ॥ गुर्व्वाम्नायान्वितो युक्तोऽयं महामन्त्रोद्धारो ज्ञेय इत्यर्थः ॥ २० ॥

सावद्यं निरवद्यमस्तु यदि वा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि।
सञ्चिन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमानं हठा—
त्त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ॥ २१ ॥

स्तुत्युपसंहारे कविर्निजगर्व्वापहारमाह। ननु लघुकविकृततदवज्ञास्पदत्वेन स्तोत्रमिदं कः पठिष्यतीति चित्ते वितर्क्याह—सावद्यमिति। इदं स्तोत्रं सावद्यं सदोषमस्तु यदि वा निरवद्यं निर्दोषमस्तु, अनया चिन्तया किं वा कोऽत्र परमार्थ इति। नूनं निश्चितं स जनः इदं स्तोत्रं पठिष्यति यस्य जनस्य त्वयि भक्तिरस्ति न तु पाठकाभावः। ननु एतादृग्वैमनस्यञ्चेत्किमर्थं स्तुतिः कृतेति चेत्तत्राह—दृढमत्यर्थमात्मनि संजायमानं घटमानं लघुत्वं बालकत्वं संचिन्त्यापि ज्ञात्वापि यस्मात्कारणात् हठात् बलेन त्वद्भक्त्या मुखरीकृतेन त्वद्भक्तिरसवाचालेन मयापि ध्रुवं निश्चितं स्तोत्रमिदं रचितं कृतम्, न खलु मम भगवतीस्तुतिकरणे शक्तिसमुल्लासः किन्तु व्यक्तकोटिसंटङ्कितभक्तिसमुद्भूतपरमानन्दरसपरवशेन यथाभावनं मया देवीं स्तुत्वा बालस्वभावसुलभं मुखरत्वमेवाविष्कृतम्। किञ्चान्यद् बालको हि मातुरुत्सङ्गचारी स्वेच्छया लपन्नपि न दूषणीयः प्रत्युत भूषणीयो भवति, तथाहमज्ञानिशिरोमणिरपि जगन्मातरं निजसहजलीलया स्तुवन् सदोषोऽपि नापराधभाजनम्, किन्तु दूषणमुद्धृत्यातुल्यवात्सल्यसुधाप्रवाहैः प्रीणयित्वा च प्रमाणपदवीमध्यारोपणीयः सकलकल्याणमय्या भवत्येवेति भावार्थसंकलितोऽर्थः॥ २१॥

## इति श्रीमल्लघ्वाचार्य्यविरचितः श्रीलघुस्तवराजः समाप्तः।

इतीति स्फुटम्। अथ व्याख्याकारकृतश्लोकाः— "जातो नवाङ्गीविवृतेर्विधातुरनुक्रमेणाभयदेवसूरिः॥ युगप्रधानो गुणशेखराह्वः सूरीश्वरः सम्प्रति तस्य पट्टे॥ १॥ श्रीसङ्घतिलकसूरिस्तच्चरणाम्भोजसेवनमरालः॥ श्रीसोमतिलकसूरिर्लघुस्तवे व्यधित वृत्तिमिमाम्॥ २॥ श्रीकाम्बोजकुलोत्तंसः स्थूणुर्नाम्नास्ति ठक्कुरः॥ यस्याभ्यर्थनया चक्रे टीकेयं ज्ञानदीपिका॥ ३॥ मुनिनन्दगुणक्षोणि (१३९७) मिते विक्रमवत्सरे॥ कृता घृतघटीपुर्यां सा चन्द्रार्कम्प्रवर्त्तताम्॥ ४॥ प्रत्यक्षरं निरूप्यास्य ग्रन्थमानं विनिश्चितम्॥ अनुष्टुभाञ्चतुःषष्ट्यग्रा जाता चतुश्शती॥ ५॥" इति श्रीसोमतिलकसूरिविरचिता श्रीलघुस्तवराजस्य ज्ञानदीपिकाख्या व्याख्या समाप्ता॥

—: ०—• :—

# अथ चर्चास्तवः

१

आनन्दसुन्दरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥

२

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य- सङ्कल्पकल्पतरवस्त्रिपुरे ! जयन्ति ।
एते कवित्वकुमुदप्रकराऽवबोधपूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः ॥

३

देवि ! स्तुतिव्यतिकरे कृतबुद्धयस्ते वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र स्तोत्रं तव त्रिपुरतापनपत्नि ! कर्तुम् ॥

४

मातस्तथापि भवतीं भवतीव्रतापविच्छित्तये स्तवमहार्णवकर्णधारः ।
स्तोतुं भवानि! स भवच्चरणारविन्दभक्तिग्रहः किमपि मां मुखरीकरोति॥

५

सूते जगन्ति भवती भवती बिभर्ति जागर्ति तत्क्षयकृते भवती भवानि ! ।
मोहं भिनत्ति भवती भवती रुणद्धि लीलायितं जयति चित्रमिदं भवत्याः ॥

६

यस्मिन्मनागपि नवाम्बुजपत्रगौरि ! गौरि ! प्रसादमधुरां दृशमादधासि ।
तस्मिन्निरन्तरमनङ्गशराऽवकीर्णसीमन्तिनीनयनसन्ततयः पतन्ति ॥

७

पृथ्वीभुजोऽप्युदयनप्रभवस्य तस्य विद्याधरप्रणतिचुम्बितपादपीठः ।
यच्चक्रवर्तिपदवीप्रणयः स एष त्वत्पादपङ्कजरजःकणजः प्रसादः ॥

८

त्वत्पादपङ्कजरजःप्रणिपातपूतैःपुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः ।
क्षीरक्षपाकरदुकूलहिमावदाता कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ॥

९

कल्पद्रुमप्रसवकल्पितचित्रपूजामुद्दीपितप्रियतमामदरक्तगीतिम् ।
नित्यं भवानि ! भवतीमुपवीणयन्ति विद्याधराः कनकशैलगुहागृहेषु ॥

१०

लक्ष्मीवशीकरणकर्मणि कामिनीनामाकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो देवि ! त्वदङ्घ्रिजनितो जयति प्रसादः ॥

११

देवि ! त्वदङ्घ्रिनखरत्नभुवो मयूखाः प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥

१२

मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं मध्येललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बि हुतभुक्कणिकानुकारं ज्योतिर्यदेतदिदमम्ब ! तव स्वरूपम् ॥

१३

रूपं तव स्फुरितचन्द्रमरीचिगौरमालोकते शिरसि वागधिदैवतं यः ।
निस्सीमसूक्तिरचनाऽमृतनिर्झरस्य तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥

१४

ध्यातासि हैमवति ! येन हिमांशुरश्मिमालाऽमलद्युतिरकल्मषमानसेन ।
तस्याऽविलम्बमनवद्यमनल्पकल्पमल्पैर्दिनैः सृजसि सुन्दरि ! वाग्विलासम् ॥

१५

त्वामैन्दवीमिव कलामनुभालदेशमुद्भासिताम्बरतलामवलोकयन्तः ।
सद्यो भवानि ! सुधियः कवयो भवन्ति त्वं भावनाहितधियां कुलकामधेनुः ॥

१६

सिन्दूरपांसुपटलच्छुरितामिव द्यां त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे! विहाय व्रीडां मृडानि! सुदृशस्तमनुद्रवन्ति ॥

१७

मातर्मुहूर्तमपि यः स्मरति स्वरूपं लाक्षारसप्रसरतन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ॥

१८

आधारमारुतनिरोधवशेन येषां सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्रं हृदि स्फुरति देवि! वपुस्त्वदीयं ध्यायन्ति तानिह समीहितसिद्धसाध्याः ॥

१९

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति रूपं तवाम्ब! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्नवक्षःस्थला मृगदृशो वशगा भवन्ति ॥

२०

रुद्राणि! विद्रुममयीं प्रतिमामिव त्वां ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम्।
तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते कण्ठाऽवसक्तमृदुबाहुलतास्तरुण्यः ॥

२१

त्वद्रूपमुल्लसितदाडिमपुष्परक्तमुद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनमपि मन्मथनिर्विशेषमालोकयन्त्युरुनितम्बतटास्तरुण्यः ॥

२२

उत्तप्तहेमरुचिरे! त्रिपुरे! पुनीहि चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगडबन्धनपीडितस्य त्वत्संस्मृतौ झटिति मे निगडास्त्रुटन्तु ॥

२३

शर्वाणि! सर्वजनवन्दितपादपद्मे! पद्मच्छदच्छविविडम्बितनेत्रलक्ष्मि!।
निष्पापमूर्तिजनमानसराजहंसि! हंसि त्वमापदमनेकविधां जनस्य ॥

२४

इच्छाऽनुरूपमनुरूपगुणप्रकर्षं सङ्कर्षिणि ! त्वमनुसृत्य यदा बिभर्षि ।
जायेत स त्रिभुवनैकगुरुस्तदानीं देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥

२५

योऽयं चकास्ति गगनार्णवरत्नमिन्दुर्योऽयं सुराऽसुरगुरुः पुरुषः पुराणः ।
यद्वाममर्धमिदमन्धकसूदनस्य देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥

२६

त्वां व्यापिनीति सुमना इति कुंडलीति त्वां कामिनीति कमलेतिकलावतीति
त्वां मालिनीति ललितेत्यपराजितेति देवि! स्तुवन्ति विजयेति जयेत्युमेति ॥

२७

उद्दामकामपरमार्थसरोजखण्डचण्डद्युतिद्युतिमुपासितषट्प्रकाराम् ।
मोहद्विपेन्द्रकदनोद्यतबोधसिंहलीलागुहां भगवतीं त्रिपुरां नमामि ॥

२८

गणेशबटुकस्तुता रतिसहायकामान्विता
स्मरारिवरविष्टरा कुसुमबाणबाणैर्युता ।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः
कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥

२९

त्वद्रूपैकनिरूपणप्रणयिताबन्धो दृशोस्त्वद्गुण—
ग्रामाकर्णनरागिता श्रवणयोस्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तितं वाचि मे
कुत्रापि त्वदुपासनाव्यसनिता मे देवि! मा शाम्यतु ।

३०

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मिस्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमातरन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥

३१

यः स्तोत्रमेतदनुवासरमीश्वरायाः श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यते ऽसौ जायेत स प्रियतमो मदिरेक्षणानाम् ।

इति श्रीमल्लघ्वाचार्यभगवत्पादप्रणीतायां श्रीपञ्चस्तव्यां
चर्चास्तवो द्वितीयः ।

—:o:—

## अथ घटस्तवः ।

१

देवि ! त्र्यम्बकपत्नि ! पार्वति ! सति ! त्रैलोक्यमातः ! शिवे !
शर्वाणि ! त्रिपुरे ! मृडानि ! वरदे ! रुद्राणि ! कात्यायनि !
भीमे ! भैरवि ! चण्डि ! शर्वरि ! कले ! कालक्षये ! शूलिनि !
त्वत्पादप्रणताननन्यमनसः पर्याकुलान् पाहि नः ॥

२

उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्च्छा इव
प्राप्तप्रौढमदा इवाऽतिविरहग्रस्ता इवार्ता इव ।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एकाऽग्रत-
स्त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति तान्सुभ्रुवः॥

३

देवि त्वां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम—
न्त्याजन्म स्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः ।

यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यः स्तौति स स्तूयते
यस्त्वां ध्यायति तं स्मरार्तिविधुरा ध्यायन्ति वामभ्रुवः ॥
४
ध्यायन्ति ये क्षणमपि त्रिपुरे! हृदि त्वां लावण्ययौवनधनैरपि विप्रयुक्ताः।
ते विस्फुरन्ति ललितायतलोचनानां चित्तैकभित्तिलिखितप्रतिमाःपुमांसः॥
५
एतं किं नु दृशा पिबाम्युत विशाम्यस्याङ्गमङ्गैर्निजैः
किं वाऽमुं निगराम्यनेन सहसा किं वैकतामाश्रये।
तस्येत्थं विवशो विकल्पघटनाकूतेन योषिज्जनः
किं तद्यन्न करोति देवि! हृदये! यस्य त्वमावर्तसे॥
६
विश्वव्यापिनि! यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्दः शक्तिरिति त्रिलोकजननि! त्वय्येव तथ्यस्थितिः।
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो बाधितुं
त्वद्भक्तानपि न क्षिणोषि च रुषा तद्देवि! चित्रं महत्॥
७
इन्दोर्मध्यगतां मृगाङ्कसदृशच्छायां मनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीपच्छविम्।
वर्षन्तीममृतं भवानि! भवतीं ध्यायन्ति ये देहिन-
स्ते निर्मुक्तरुजो भवन्ति विपदः प्रोज्झन्ति तान्दूरतः॥
८
पूर्णेन्दोः शकलैरिवातिबहलैः पीयूषपूरैरिव
क्षीराब्धेर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव।

प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहितार्तितापविपदस्ते सम्पदं बिभ्रति ॥

९

ये संस्मरन्ति तरलां सहसोल्लसन्तीं त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम्।
रागार्णवे बहलरागिणि मज्जयन्तीं कृत्स्नं जगद्दधति चेतसि तान्मृगाक्ष्यः॥

१०

लाक्षारसस्नपितपङ्कजतन्तुतन्वीमन्तःस्मरत्यनुदिनं भवतीं भवानि ! ।
यस्तं स्मरप्रतिममप्रतिमस्वरूपा नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ॥

११

स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ॥

१२

मूर्ध्नीन्दोः सितपङ्कजासनगतां प्रालेयपाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रेऽपि रन्ध्रेऽपि च ।
अच्छिन्ना च मनोहरा च ललिता चाऽतिप्रसन्नापि च
त्वामेवं स्मरतां स्मरारिदयिते! वाक्सर्वतो वल्गति॥

१३

ददातीष्टान्भोगान् क्षपयति रिपून् हन्ति विपदो
दहत्याधीन्व्याधीन् शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद् ध्याता देवी किमिव निरवद्यं न कुरुसे ॥

१४

यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय—
त्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति ।
यश्च त्र्यम्बकवल्लभे ! तव गुणानाकर्णयत्यादरा–
त्तस्य श्रीर्न गृहादपैति विजयस्तस्याग्रतो धावति ॥

१५

किं किं दुःखं दनुजदलिनि ! क्षीयते न स्मृतायां
काका कीर्तिः कुलकमलिनि! ख्याप्यते न स्तुतायाम्।
का का सिद्धिः सुरवरनुते ! प्राप्यते नार्चितायां
कं कं योगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥

१६

ये देवि ! दुर्धरकृतान्तमुखान्तरस्था ये कालि ! कालघनपाशनितान्तबद्धाः।
ये चण्डि ! चण्डगुरुकल्मषसिंधुमग्नास्तान्पासि मोचयसितारयसिस्मृतैव।

१७

लक्ष्मीवशीकरणचूर्णसहोदराणि त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि॥

१८

रे मूढाः किमयं वृथैव तपसा कायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमिति रे रिक्तीक्रियन्ते गृहाः ।
भक्तिश्चेदनपायिनी भगवतीपादद्वयी सेव्यता-
मुन्निद्राऽम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ॥

१९

याचे न कंचन न कंचन वञ्चयामि सेवे न कंचन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमश्नि भजे वरस्त्रीर्देवी हृदि स्फुरति मे कुलकामधेनुः ॥

२०

★ शब्दब्रह्ममयि ! स्वच्छे ! देवि ! त्रिपुरसुन्दरि ।
यथाशक्ति जपं पूजां गृहाण परमेश्वरि ! ॥

२१

★ नन्दतु साधकाः सर्वे विनश्यन्तु विदूषकाः ।
अवस्था शाम्भवी मेऽस्तु प्रसन्नोस्तु गुरुः सदा ॥

२२

★ दर्शनात्पापशमनी जपान्मृत्युविनाशिनी ।
पूजिता दुःखदौर्भाग्यहरा त्रिपुरसुन्दरी ॥

२३

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥

२४

★ मन्त्रहीनं क्रियाहीनं विधिहीनं च यद्गतम् ।
त्वया तत्क्षम्यतां देवि ! कृपया परमेश्वरी ! ॥

इति श्रीमल्लघ्वाचार्यभगवत्पादप्रणीतायां श्रीपञ्चस्तव्यां
घटस्तवस्तृतीयः ।

## अथ अम्बास्तवः

१

यामामनन्ति मुनयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो वदन्ति ।
तामर्धपल्लवितशङ्कररूपमुद्रां देवीमनन्यशरणः शरणं प्रपद्ये ॥

२

अम्ब ! स्तवेषु तव तावदकर्तृकाणि कुण्ठीभवन्ति वचसामपि गुम्फनानि ।
डिम्भस्य मे स्तुतिरसावसमञ्जसाऽपि वात्सल्यनिघ्नहृदयां भवतीं धिनोतु ॥

३

व्योमेति बिन्दुरिति नाद इतीन्दुलेखारूपेति वाग्भवतनूरिति मातृकेति ।
निःष्यन्दमानसुखबोधसुधास्वरूपा विद्योतसे मनसि भाग्यवतां जनानाम् ॥

४

आविर्भवत्पुलकसन्ततिभिः शरीरैर्निष्यन्दमानसलिलैर्नयनैश्च नित्यम् ।
वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवाम्ब ! भुवनेषु त एव धन्याः ॥

---

★ एतदङ्कितश्लोकाः काश्मीरकाणामेव पुस्तकेषु दृश्यन्ते ।
केरल—चोल—महाराष्ट्र—कर्नाटकादिपुस्तकेषु न सन्ति ।

५

वक्त्रं यदुद्यतमभिष्टुतये भवत्यास्तुभ्यं नमो यदपि देवि ! शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब ! तानि कस्याऽपि कैरपि भवन्ति तपोविशेषैः॥

६

मूलालवालकुहरादुदिता भवानि ! निर्भिद्य षट् सरसिजानि तडिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दुनिःष्यन्दमानपरमाऽमृततोयरूपा ॥

७

दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
धत्ते तदाप्रभृति देवि ! ललाटनेत्रं सत्यं ह्रियेव मुकुलीकृतमिन्दुमौलिः ॥

८

अज्ञातसम्भवमनाकलितान्ववायं भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्वं करग्रहणमङ्गलतो भवत्याः शम्भुं क एव बुबुधे गिरिराजकन्ये ! ॥

९

चर्माऽम्बरं च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसंहतिपरिग्रहता च शम्भोः शोभां बिभर्ति गिरिजे ! तव साहचर्यात् ॥

१०

कल्पोपसंहरणकेलिषु पण्डितानि चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मातर्लास्यात्मना परिणमन्ति जगद्विभूत्य ।

११

जन्तोरपश्चिमतनोः सति कर्मसाम्ये निश्शेषपाशपटलच्छिदुरा निमेषात् ।
कल्याणि ! दैशिककटाक्षसमाश्रयेण कारुण्यतो भवसि शाम्भववेधदीक्षा ॥

१२

मुक्ताविभूषणवती नवविद्रुमाभा यच्चेतसि स्फुरसि तारकितेव सन्ध्या ।
एकः स एव भुवनत्रयसुन्दरीणां कन्दर्पतां व्रजति पञ्चशरीं विनापि ॥

१३

ये भावयन्त्यमृतवाहिभिरंशुजालैराप्यायमानभुवनाममृतेश्वरीं त्वाम् ।
ते लङ्घयन्ति ननु मातरलङ्घनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्ष्याम् ॥

१४

यः स्फाटिकाऽक्षगुणपुस्तककुण्डिकाढ्यां व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ।
पद्मासनां च हृदये भवतीमुपास्ते मातः स विश्वकवितार्किकचक्रवर्ती ॥

१५

बर्हावतंसयुतबर्बरकेशपाशां गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां त्वामेव नौमि शबरीं शबरस्य जायाम् ॥

१६

अर्धेन किं नवलताललितेन मुग्धे क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनस्य परिहासवचांसि मन्ये मन्दस्मितेन तव देवि ! जडीभवन्ति ॥

१७

ब्रह्माण्डबुद्बुदकदम्बकसङ्कुलोऽयं मायोदधिर्विविधदुःखतरङ्गमालः ।
आश्चर्यमम्ब ! झटितिप्रलयं प्रयाति त्वद्ध्यानसन्ततिमहावडवामुखाग्नौ ॥

१८

दाक्षायणीति कुटिलेति गुहारणीति कात्यायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि सन्दृश्यसे बहुविधा ननु नर्तकीव ॥

१९

आनन्दलक्षणमनाहतनाम्नि देशे नादात्मना परिणतं तव रूपमीशे ! ।
प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥

२०

त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं
त्वं चेतनाऽसि पुरुषे पवने बलं त्वम् ।

त्वं स्वादुताऽसि सलिले शिखिनि त्वमूष्मा
निःसारमम्ब ! निखिलं त्वदृते यदि स्यात्॥

२१

ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं सूते पयांसि यदहिर्धरणीं च धत्ते।
यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमम्ब ! तव केवलमाज्ञयैव॥

२२

सङ्कोचमृच्छसि यदा गिरिजे ! तदानीं वाक्तर्कयोस्त्वमसि भूमिरनामरूपा।
यद्वा विकासमुपयासि यदा तदानीं त्वन्नामरूपगणनाः सुकरीभवन्ति॥

२३

भोगाय देवि ! भवतीं कृतिनः प्रणम्य भ्रूकिङ्करीकृतसरोजगृहासहस्राः।
चिन्तामणिप्रचयकल्पितकेलिशैले कल्पद्रुमोपवन एव चिरं रमन्ते॥

२४

हन्तुं त्वमेव भवसि त्वदधीनमीशे ! संसारतापमखिलं दयया पशूनाम्।
वैकर्तनी किरणसंहतिरेव शक्ता घर्मं निजं शमयितुं निजयैव वृष्ट्या॥

२५

शक्तिः शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमासनजालमिच्छा।
ऐश्वर्यमायतनमावरणानि च त्वं किं तन्न यद्भवसि देवि ! शशाङ्कमौलेः॥

२६

भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्याऽनले मरुति शांतिरतीतशांतिः।
व्योम्नीति याः किल कलाः कलयंति विश्वं तासां विदूरतरमम्ब ! पदं त्वदीयम्॥

२७

यावत्पदं पदसरोजयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये !।
तावद्विकल्पजटिलाः कुटिलप्रकारास्तर्कग्रहाः समयिनां प्रलयं न यान्ति॥

२८

यद्देवयानपितृयानविहारमेके कृत्वा मनः करणमण्डलसार्वभौमम्।
याने निवेश्य किल कारणपञ्चकस्य पर्वाणि पार्वति ! नयंति निजासनत्वम्॥

२९

स्थूलासु मूर्तिषु महीप्रमुखासु मूर्तः कस्याश्चनापि तव वैभवमम्ब! यस्याः ।
पत्या गिरामपि न शक्यत एव वक्तुं साऽपिस्तुताकिलमयेतितितिक्षितव्यम्॥

३०

कालाग्निकोटिरुचिमम्ब! षडध्वशुद्धावाप्लावनेषु भवतीममृतौघवृष्टिम् ।
श्यामां घनस्तनतटां सकलीकृतौ च ध्यायन्त एव जगतां गुरवो भवन्ति ॥

३१

विद्यां परां कतिचिदम्बरमम्ब! केचिदानन्दमेव कतिचित्कतिचिच्च मायाम्।
त्वां विश्वमाहुरपरे वयमामनाम साक्षादपारकरुणां गुरुमूर्तिमेव ॥

३२

कुवलयदलनीलं बर्बरस्निग्धकेशं पृथुतरकुचभाराऽऽक्रांतकांताऽवलग्नम् ।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं नः सकलभुवनमातः! संततं सन्निधत्ताम्॥

इति श्रीमल्लध्वाचार्यभगवत्पादप्रणीतायां श्रीपञ्चस्तव्यामम्बास्तवश्चतुर्थः ।

## अथ सकलजननीस्तवः

१

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै—
रमी मायाग्रन्थौ तव परिलुठन्तः समयिनः ।
जगन्मातर्जन्मज्वरभयतमःकौमुदि ! वयं—
नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम् ।

२

वचस्तर्काऽगम्यस्वरसपरमानन्दविभव—
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवस्याराध्याय स्तनभरविनम्राय सततं
नमो यस्मै कस्मैचन भवतु मुग्धाय महसे ॥

३

लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिका—

मुदञ्चद्घर्माम्भःकणगुणितनीलोत्पलरुचम् ।

शिवं पार्थत्राणप्रवणमृगयाकारगुणितं

शिवामन्वग्यान्तीं शबरमहमन्वेमि शबरीम् ॥

४

मिथः केशाकेशिप्रधननिधनास्तर्कघटना—

बहुश्रद्धाभक्तिप्रणयविषयाश्चाप्तविधयः ।

प्रसीद प्रत्यक्षीभव गिरिसुते ! देहि शरणं

निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ॥

५

शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं

कदा केन क्वेति क्वचिदपि न कश्चित्कलयति ।

अमुष्मिन्विश्वासं विजहिहि ममाह्वाय वपुषि

प्रपद्येथाश्चेतः सकलजननीमेव शरणम् ॥

६

अनाद्यन्ताऽभेदप्रणयरसिकापि प्रणयिनी

शिवस्यासीर्यत्त्वं परिणयविधौ देवि ! गृहिणी ।

सवित्री भूतानामपि यदुदभूः शैलतनया

तदेतत्संसारप्रणयनमहानाटकसुखम् ॥

७

ब्रुवन्त्येके तत्त्वं भगवति ! सदन्ये विदुरसत्

परे मातः ! प्राहुस्तव सदसदन्ये सुकवयः ।

परे नैतत्सर्वं समभिदधते देवि ! सुधिय-
स्तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ! ॥
८
तडित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं
प्रविष्टं स्वाधारं पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टत्रिंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥
९
चतुष्पत्रान्तः षड्दलभगपुटान्तस्त्रिवलय—
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतियुते ! ।
षडस्रं भित्त्वादौ दशदलमथ द्वादशदलं
कलास्रं च द्व्यस्रं गतवति ! नमस्ते गिरिसुते ! ॥
१०
कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः
परे तत्सम्भेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे
महामाये ! तत्त्वं तव कथममी निश्चिनुमहे ॥
११
षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामानम्रस्तवपुरुषकारो विजयते ॥
१२
प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद् द्वन्द्वं रविशशिसमाख्यं कवलयन् ।

प्रविश्योर्ध्वं नादं लयदहनभस्मीकृतकुलः
प्रसादात्ते जन्तुः शिवमकुलमम्ब ! प्रविशति ॥

१३

प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां
समुन्मीलन्मुक्ताफलबहलनेपथ्यकुसुमाम् ।
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां
सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ॥

१४

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलै—
श्चलन्मुद्राफेनैर्बहुविधलसद्दैवतझषैः ।
क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी
भवानि ! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ॥

१५

महीपाथोवह्निश्वसनवियदात्मेन्दुरविभि—
र्वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब ! महिमा ।
अमून्यालोक्यन्ते भगवति! न कुत्राप्यणुतमा-
मवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥

१६

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेदत्र क्वचन तव मातः ! करुणया
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥

१७

कलां प्रज्ञामाद्यां समयमनुभूतिं समरसां
गुरुं पारम्पर्यं विनयमुपदेशं शिवकथाम् ।

प्रमाणं निर्वाणं प्रकृतिमतिभूतिं परगुहां
विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥

१८

प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे
ततस्तत्त्वे चाष्टध्वनिभिरनुपाधिन्युपरते ।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां परतनुम् ॥

१६

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराकारज्ञानप्रकृतिमनवच्छिन्नकरुणाम् ।
सवित्रीं भूतानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥

२०

जगत्काये कृत्वा तमपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तमपि परनादाख्यगहने ।
तदेतज्ज्ञानाख्ये तदपि परमानन्दविभवे
महाव्योमाकारे त्वदनुभवशीलो विजयते ॥

२१

विधे ! विद्ये ! वेद्ये ! विविधसमये ! वेदगुलिके !
विचित्रे ! विश्वाद्ये ! विनयसुलभे ! वेदजननि ! ।
शिवाज्ञे ! शीलस्थे ! शिवपदवदान्ये ! शिवनिधे !
शिवे ! मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥

२२

विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।

अलंचक्रे कण्ठं यदपि गरलेनाम्ब ! गिरिशः
शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥

२३

विरञ्च्याख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम् ।
भवन्ती सादाख्या शिवयसि च पाशौघदलिनी
त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते ! ॥

२४

मुनीनां चेतोभिः प्रमृदितकषायैरपि मना—
गशक्ये संस्प्रष्टुं चकितचकितैरम्ब सततम् ।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे
कथं ते विदन्ते पदकिसलये पार्वति ! पदम् ॥

२५

तडिद्वल्लीं नित्याममृतसरितं पाररहितां
मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।
गिरां दूरां विद्यामवनतकुचां विश्वजननी—
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥

२६

शरीरं क्षित्यम्भःप्रभृतिरचितं केवलमिदं
सुखं दुःखं चायं कलयति पुमांश्चेतन इति ।
स्फुटं जानानोऽपि प्रभवति न देही रहयितुं
शरीराऽहंकारं तव समयबाह्यो गिरिसुते ॥

२७

पिता माता भ्राता सुहृदनुचरः सद्म गृहिणी
वपुः पुत्रो मित्रं धनमपि यदा मां विजहति ।

तदा मे भिन्दाना सपदि भयमोहान्धतमसां

महाज्योत्स्ने ! मातर्भव करुणया सन्निधिकरी ॥

२८

सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः

सदोषं तं हित्वा तदनु गिरिराजस्य तनया ।

अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती

विवाहाज्जायासीत्यहह चरितं वेत्ति तव कः ॥

२६

कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः

परं ब्रम्ह क्षुद्रं तव नियतमानन्दकणिका ।

शिवादि क्षित्यन्तं त्रिवलयतनोः सर्वमुदरे

तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ! ॥

३०

त्वया यो जानीते रचयति भवत्यैव सततं

त्वयैवेच्छत्यम्ब ! त्वमसि निखिला यस्य तनवः ।

गतः साम्यं शम्भुर्वहति परमं व्योम भवती

तथाप्येवं हित्वा विहरति शिवस्येति किमिदम् ॥

३१

पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं

परं स्थूलं सूक्ष्मं सकुलमकुलं गुह्यमगुहम् ।

दवीयो नेदीयः सदसदिति विश्वं भगवतीं

सदा पश्यन्त्याज्ञां वहसि भुवनक्षोभजननीम् ॥

३२

मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः

पयोधौ कल्लोलप्रतिहतमहिम्नीव पृषतः ।

उदेत्योदेत्यम्ब ! त्वयि सह निजैस्तात्त्विककुलै—
भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशः ॥
३३
विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः
स्वभावो जैनेन्द्रः सुगतमुनिराकाशमनिलः ।
शिवः शक्तिश्चेति श्रुतिविषयतां तामुपगतां
विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥
३४
प्रविश्य स्वं मार्गं सहजदयया दैशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम् ।
परानन्दाकारां सपदि शिवयन्तीमपि तनुं
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥
३५
शिवस्त्वं शक्तिस्त्वं त्वमसि समय त्वं समयिनी
त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं
पृथक्तत्त्वं त्वत्तो भगवति ! न वीक्षामह इमे ॥
३६
असंख्यैः प्राचीनैर्जननि ! जननैः कर्मविलयाद्-
गते जन्मन्यन्तं गुरुवपुषमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं क्रमतनुरपि त्वां विदितवान्
नयेयं त्वत्पूजास्तुतिविरचनैरेव दिवसान् ॥
३७
यत्षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम् ।

तस्मिन्नन्तः कुचभरनतां कुण्डलीतः प्रवृत्तां
श्यामाकारां सकलजननीं सन्ततं भावयामि ॥

३८

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका।
वहति कुचभराभ्यां या विनम्रापि विश्वं
सकलजननि ! सा त्वं पाहि मामित्यवश्यम् ॥

इति श्रीमल्लघ्वाचार्यभगवत्पादप्रणीतायां श्रीपञ्चस्तव्यां सकलजननीस्तवः पञ्चमः।

## अथ श्रीमहानुभवशक्तिस्तवः

प्रपूर्य स्वातन्त्र्यादनुपमनिजानन्दसुधया
मुहुर्नानाकारान्निजरचितसद्भावचषकान्।
स्वमेव प्रीणानं निजललितघूर्णानमतुलं
नमामो विश्वेषां विमल-चरणं दैशिकवरम् ॥१॥

प्राक् सर्गतोऽपि परतोऽपि च मध्यदेशे,
सांसर्गिकेऽत्र सकले परिपूर्णरूपा।
नैसर्गिकी परशिवाकृतिबिन्दुबीजं,
वैसर्गिकी जयति शक्तिरनन्तवीर्या ॥ २ ॥

अस्मीति मात्रभरिताखिलविश्वभावा
बोधाभिनन्दनसमुच्छलितात्मरूपा।
शान्तापि घोरतरघोरतमस्वरूपै—
राभाति सङ्कलितपञ्चविध-प्रपञ्चात् ॥ ३ ॥

यस्याः स्वतन्त्र-कलना कलिता विचित्रा,
ज्ञानावलीवलयमूलमतीव सूक्ष्मा।
इच्छाभिधा हृदि झगित्यवभासमाना

नित्याविराजतितरां शिवभूतिभूता ॥ ४ ॥
यावत्क्रिया प्रचयपुष्टिनिदानभूता,
ज्ञानाभिधा शिवतनूः श्रुतिशास्त्रमूलम् ।
इच्छाविकाशफलितं हृदयं क्रियायाः,
सर्वत्र या विजयतेऽस्तु सा समस्तम् ॥ ५ ॥
आब्रह्मकीटहृदयेष्वनुभूयमाना ।
सर्वेषु कार्यकरणेषु विराजमाना ।
शम्भोः प्रसिद्धतमवष्म विकाशभूमि
प्रीणातु सन्ततमियं शुभगाक्रियाख्या ॥ ६ ॥
चिदानन्दाशंसा विविकृतिमयी भावशुभगा,
कला धन्या कन्या जयकृतिरमन्याशिवगुरोः ।
ददानैन्द्रीं भूतिं हिमकिरणशौक्तीं तनुरुचिं
प्रभा सौरीं सोमामृतकवलिनीं पातु जयिनी ॥७॥
महानुभवसंस्तुतां महितबिन्दु मध्यस्थितां,
महार्थमणिमेखलां मदनसूदनानन्दिनीम् ।
महाऽमृतमदत्रयं विजयते स्तुवन्सम्मदात्,
महामहिममण्डितोऽप्यमृतवाग्भवः पण्डितः ॥८॥

इति श्रीमदमृतवाग्भवाचार्यकृतः श्रीमहानुभवशक्तिस्तवः ॥

—: (-:-) :—

## श्रीलघुस्तवन्यासादि ।

ॐ अस्य श्रीलघुस्तवराजस्तोत्रमहामन्त्रस्य वृद्धसारस्वतऋषिः शार्दूलविक्रीडितच्छन्दः श्रीत्रिपुराबालादेवता ऐं बीजं क्लीं कीलकं सौः शक्तिः श्रीत्रिपुराप्रसादसिद्ध्यर्थं जपे विनियोगः। श्रीवृद्धसारस्वत ऋषये नमः शिरसि । शार्दूलविक्रीडितच्छन्दसे नमो मुखे । श्रीत्रिपुरा-

बालादेवतायै नमो हृदि । ऐंबीजाय नमो गुह्ये । क्लींकीलकाय नमः पादयोः । सौः शक्तये नमः इति सर्वाङ्गे ॥ ऐं अंगुष्ठाभ्यां नमः । क्लींतर्जनीभ्यां नमः । सौः मध्यमाभ्मां नमः । ऐं अनासिकाभ्यां नमः । क्लीं कनिष्टिकाभ्यां नमः । सौः करतलकरपृष्ठाभ्यां नमः ॥ ऐं हृद-याय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट् । ऐं कवचाय हुँ । क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट् ॥ आधारे तरुणार्कबिम्ब-रुचिरं सोमप्रभं वाग्भवं बीजं मन्मथमिन्द्रगोपकनिभं हृत्पङ्कजे संस्थि-तम् । रन्ध्रे ब्रम्हपदे च शाक्तमपरं चन्द्रप्रभाभासुरं ये ध्यायन्ति पदत्रयं तव शिवे ते यान्ति सौख्यं पदम् ॥ इति ध्यात्वा मालां गृहीत्वा मां माले महामाये शुद्धसत्वस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मां सिद्धिदा भव ॥ इत्युच्चार्य पदत्रयं जपेत् । जपान्ते—गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ इत्युक्त्वा जपं देव्या वामहस्ते निवेदयेत् । तदनु श्रीलघुस्तवराजं सानन्दं पठेद्विहरेच्च स्वच्छन्दमिति शम् ॥

—:—०—:—

## श्रीलघुस्तव का हिन्दी अनुवाद ।

(श्रीशिवानन्दनाथ)

(१) इन्द्र के धनुष की तरह ललाट में प्रभा को धारण करनेवाली, सिर के चारों ओर चन्द्रमा के समान शुभ्र कान्तिवाली और हृदय में सूर्य के समान सदैव प्रभावाली ज्योतिर्मयी, वाणीमयी श्रीत्रिपुरसुन्दरी एकदम हमारे अपने त्रिपदों ( ऐं, क्लीं, सौः, ) से पापको नष्ट करे ।

(२) छोटी त्रपुसी (ककड़ी) लता के प्रारम्भिक सूक्ष्म तन्तु से स्पर्धा करने-वाली जो मात्रा आपके सदैव प्रथम वाग्बीज में स्थित है, उसका हम ध्यान या संमान करते हैं । यह मात्रा ही आपकी संसार को जन्म देनेवाली कुण्डलिनी शक्ति है । इसको जानकर फिर मनुष्य माता के गर्भ का अर्भकत्व धारणकर स्पर्श तक नहीं करते ।

(३) संभ्रमकारि वस्तु का अवलोकन कर जो भ्रमवश सहसा ऐं ऐं उच्चारण न करके बिन्दुरहित अर्थात् ऐ ऐ ही जप करता है उसपर भी हे देवि निश्चय तेरा अनुग्रह होकर वह अमृत रससे सनी अपने मुखकमलसे सूक्तिमय वाणी बोलने लगता है।

(४) हे नित्ये, तेरा दूसरा कामराज (क्लीं) मन्त्राक्षर बड़ा ही पवित्र है। इस भूमिपर बिरले ही विद्वान् जानते हैं कि यह सारस्वत ईं बीज है। प्रतिपर्व सत्य-तपा मुनिके आश्रममें ब्राह्मणवर्ग इस बीजका आख्यान करते हुए इसे ॐ या प्रणवकी जगह प्रथम उच्चारण करते हैं।

(५) जो तुरन्त वाणी में प्रवृत्ति करनेवाला है, अनेक विद्वान् जिसके प्रभाव को देख चुके हैं, वह तेरा चन्द्रमाकी कान्तिवाला तीसरा (सौः) सारस्वत बीज है। जिस प्रकार सरस्वती नदी का अनुगामी होकर वडवानल उसके जडजल का शोषण करता है, ठीक उसी प्रकार गौ शब्द वाणीमें प्रवृत्त होते हुए गकार-रहित भी सिद्धिका देनेवाला है अर्थात् जड़ता का हरण करता है।

(६) चाहे व्यंजनसहित हो चाहे व्यंजनरहित, चाहे कूटस्थ हो, चाहे पृथक क्रमगत हो, चाहे व्युत्क्रम हो, तेरा एक एक बीज हे देवि अनघ (पापरहित) है। इतना ही नहीं, जिस जिस कामकी अपेक्षा कर मनुष्य जिस किसी भी विधिसे तेरे उक्त बीज का चिन्तन करता है, जप करता है, उस उस कामको समस्तरू-पेण वह तेरा बीज तुरन्त सफल करता है।

(७) हे अम्ब, वामे अर्थात् बांयें हाथमें पुस्तक धारण की हुई, इसी प्रकार दूसरे बांये हाथमें अपने भक्तों को अभयदान देती हुई, दाहिने एक हाथ में कमल पुष्पों की माला ली हुई और इसी प्रकार दूसरे दाहिने हाथ से भक्तों को अभीष्ट वरदान देती हुई, इस प्रकार चार भुजोंवाली, कपूर और कुन्द पुष्पके समान उज्ज्वल वर्णवाली, विकसित कमलपत्र के समान सुन्दर नेत्रों से दया-भरी दृष्टि से अपने भक्तों की ओर देखनेवाली, इस प्रकार की आकृति का हे अम्ब जो अन्तःकरण से तेरा ध्यान नहीं करते हैं, उनका कवित्व या पाण्डित्य किस प्रकार सिद्ध होय ? सारांश, तेरी दयादृष्टि से ही कवित्व एवं पाण्डित्य सिद्ध हो सकता है, अन्यथा नहीं।

(८) हे भारति ( सरस्वतिरूपिणि ) जो तेरे श्वेत कमलोंके समूह के समान सुन्दर रूप को तथा अपने सिरपर छत्रवत् विराजमान भक्तों के सिर को अमृत रस से सींचती हुई का ध्यान करते हैं। उनहीं के मुखकमल से निरंतर श्री गंगाजी के प्रचण्ड एवं चंचल प्रवाहकी तरह अपने प्रकाशसे उछलते हुए सुन्दर तरंगोंकी तरह गंभीर अर्थमयी स्पष्ट अक्षरों एवं पदोंवाली सरस्वती निकलती है।

(९) हे भगवति, तेरे तेज से जो सारे आकाश को सिन्दूरपराग के समूह से आच्छादित रक्त वर्ण का देखते हैं तथैव सारी पृथ्वी को भी लाक्षा (यावक) रस के समूह से एक क्षणमात्र भी उसमें विलीन देखते हैं, उनके सिवाय किसी में भी मन न लगाती हुई, मृगशावकनयनी कामज्वर से पीड़ित एवं त्रस्त स्त्रियां उनके वश में हो जाती हैं।

(१०) हे भगवति, जो तुझे देदीप्यमान सुवर्ण के कुण्डल एवं बाजूबन्द धारण की हुई, इसी प्रकार कमरमें सुवर्ण का कन्दोरा तथा गले में सुवर्णमाला धारण की हुई तेरी सुन्दर आकृति को चित्त में धारण कर एक क्षणभर भी स्थिरता से ध्यान करते हैं, उनके घरोंमें बड़े उत्साह से दिन प्रतिदिन विस्तार को प्राप्त होती हुई, मतवाले हाथियों के कान की तरह नितान्त चंचल लक्ष्मी भी स्थिर होकर रहती है।

(११) चन्द्रमा के खण्डों (शकलों) से मण्डित (शोभायमान) जटाजूटवाली, नरमुंडों की मालाधारिणी, गुडहल पुष्पके समान रक्तवस्त्र धारिणी, प्रेतासना, चारभुजों तथा तीन नेत्रोंवाली, नितान्त कठोर तथा उच्च कुचोंवाली, मध्यभाग में निम्नवलित्रय से सुशोभित शरीरवाली हे भगवति तेरे इस स्वरूप का ध्यान तेरी प्राप्ति के लिये योगीराज आर्भटी (वीरवृत्ति) से करते हैं। सारांश, तेरे इस ध्यान से योगियों को सर्वसिद्धि एवं मोक्ष की प्राप्ति होती है।

(१२) अल्प परिवारवाले राजाओं के सामान्यमात्र (अनुन्नत) कुल में जन्म लेकर भी वत्सराज समस्त भूमण्डल के चक्रवर्ती पद को प्राप्त होकर बड़ा उन्नत प्रतापी तथा विद्याधरों के समूह से वन्दितपद हुआ। हे देवि, यह सब फल उसे तेरे चरणकमलों की प्रणति मात्र से तथा तेरे प्रसाद ( कृपाकटाक्ष ) के उदय से ही हुआ।

(१३) हे चण्डि, तेरे चरणकमलों की पूजा के निमित्त बिल्वीदल ( बेल-पत्र ) तोड़ते हुए जिनके हाथों को करोड़ों कांटों का परिचय नहीं मिला अर्थात् भगवती की पूजा के निमित्त बिल्वपत्रों के तोड़ते हुए जिनके हाथों में करोड़ों कांटे नहीं चुभे वे दूसरे जन्म में दण्ड, अंकुश, चक्र, चाप, कुलिश, श्रीवत्स एवं मत्स्यांकित हाथोंवाले राजा किस प्रकार हो सकते हैं ? अर्थात राजा वे ही होते हैं जिनके हाथों में भगवती के पूजनार्थ पूर्वजन्म में बिल्वपत्र तोड़ते हुए करोड़ों बेल के कांटे चुभे हों।

(१४) ब्राह्मण, क्षत्रिय, वैश्य और शूद्र ये क्रम से क्षीर, घृत, मधु और आसव से हे देवि त्रिपुरे तेरी पूजाविधिमें परापर कला को संतृप्त कर जिस जिस सिद्धि के लिए प्रार्थना करते हैं वे मन और बुद्धिवाले विघ्नों को अविघ्नों

में परिणत कर शीघ्र ही उस उस सिद्धि को प्राप्त करते हैं यह निश्चय है।

(१५) इस चतुर्दश भुवन ( संपूर्ण जगत् ) में जितने प्रकार के शब्द या नाम प्राणियों के मुखसे निकलते हैं उन समस्त शब्दों की जननी एकमात्र तू ही है। इसीलिये संसार में तुझे वाग्वादिनी नाम से पुकारते हैं इसी प्रकार केशव (विष्णु), वासव (इन्द्र) आदि भी सब तुझसे ही प्रगट होते हैं, यह सत्य है और जब कल्पविरम ( प्रलयकाल ) आता है तब ये सब तेरे उत्पन्न किए हुए ब्रह्मा—विष्णु-महेश आदि तुझ में ही लीन हो जाते हैं, सारांश, जगत् की उत्पत्ति, स्थिति और लय यह सब जिसके द्वारा होकर जिसमें लीन हो जाता है, वह तू ही अचिन्त्यरूपगहना ( जिसका रूप बड़े बड़े ज्ञानियों के चिन्तन में नहीं आता ऐसी गम्भीर और गहन) शक्ति है, वह किसी के जाननेमें नहीं आती। वस्तुतः जो एक से अनेक होकर अन्त में केवल एक ही रह जाती है, वह अचिन्त्य-रूप-गहना पराशक्ति हे मां, त्रिपुरे तू ही है।

(१६) इस जगत् की उत्पत्ति, स्थिति और लय ये सब त्रिसंज्ञक तत्वों को लिए रहता है, जैसे कि देवानां त्रितयी अर्थात् ब्रह्मा, विष्णु, महेश तथैव गुरु, परमगुरु तथा परमेष्ठिगुरु इन तीनों देवोंकी त्रिसंज्ञकता, ऐसे ही हुतभुजां अर्थात् गार्हपत्य, दक्षिणाग्नि और आहवनीय इन तीनों अग्नियों की अथवा हृदय, ललाट और शिरस्थित तीनों ज्योतियों की त्रयी (त्रिसंज्ञकता), शक्तित्रय अर्थात् इच्छाशक्ति, ज्ञानशक्ति तथा क्रियाशक्ति अथवा ब्राह्मी; वैष्णवी और माहेश्वरी इन तीनोंकी त्रिसंज्ञकता, त्रिस्वरा अर्थात् उदात्त, अनुदात्त और स्वरित इन तीनों अथवा अकार, इकार, बिन्दुस्वरूप तीनों स्वरों की त्रिसंज्ञकता, त्रैलोक्यं अर्थात् स्वर्ग, मृत्यु, पाताल अथवा (१) मूलाधारस्वाधिष्ठानमणिपूरक, (२) अनाहतनिरोधविशुद्धि तथा (३) आज्ञा शीर्षब्रह्मस्थान इन तीनों लोकोंकी त्रिसंज्ञकता, त्रिपदी अर्थात् जालन्धर, कामरूप, उड्डीयान पीठरूप अथवा गगनानंद, परमानन्द तथा कमलानन्द संज्ञक नादत्रयी अथवा गायत्री संज्ञक त्रिपदी की त्रिसंज्ञकता, त्रिपुष्कर अर्थात् सिर, हृदय और नाभिकमलस्वरूप इन तीनों की त्रिशंज्ञकता, त्रिब्रह्म अर्थात् इडा, पिंगला, सुषुम्णारूप अथवा अतीत, अनागत, वर्तमान ज्ञानप्रकाशक हृदय, व्योम तथा ब्रह्मरंध्रान्तक त्रिब्रह्म की त्रिसंज्ञकता, वर्णात्रय अर्थात् ब्राह्मण, क्षत्रिय, वैश्य अथवा वाग्भव, कामराज, शक्तिबीज ये मूलमन्त्र के ऐं, क्लीं, सौः इस वर्णत्रय की त्रिसंज्ञकता, इसी प्रकार जो कुछ जगत् में धर्म, अर्थ, कामसंज्ञक त्रिवर्गात्मकादि वस्तु त्रिधा नियमित बताई गई है, वह सब त्रिपुरा नाममें समाविष्ट हो जाती हैं।

(१७) हे भगवति ! राजकुलसंबंधी कार्यों में श्री लक्ष्मी का स्मरण करके, इसी प्रकार संग्रामभूमि में जया, मार्ग चलते हुए क्षेमंकरी, हाथी, सिंह, सर्प आदि मांसाहारी जीवों से पूर्ण भयंकर जंगल पहाड़ और किले में शबरी का स्मरण करके, वैसे ही भूत-प्रेत-पिशाच और जृंभक के भय में महाभैरवी का स्मरण करके और चित्तभ्रम में भगवती त्रिपुरा का स्मरण करके एवं भयंकर से भयंकर विपत्ति और जलप्रकोप में भगवती तारा का स्मरण करके भक्तगण पूर्वोक्त समस्त विपत्तियों से पार हो जाते हैं।

(१८) अब माया आदि भगवती के २४ पवित्र नामों का स्मरण करते हैं जैसे कि माया, कुंडलिनी, क्रिया, मधुमती, काली, कलामालिनी, मातङ्गी, विजया, जया, भगवती, देवी, शिवा, शाम्भवी, शक्तिः, शंकरवल्लभा, त्रिनयना, वाग्वादिनी, भैरवी, ह्रींकारी, त्रिपुरा, परापरमयी, माता, कुमारी, ये सब हे मातेश्वरी त्रिपुरे ! तेरे ही नाम हैं और इन्हीं नामों में से भगवती के एक एक बीज का निर्देश किया हुआ है जैसे कि माया से ह्रीं, मालिनी से श्रीं काली से क्लीं आदि आदि।

(१९) "आ" और "ई" से पल्लवित परस्पर सम्मिलित ऐसे एक दो तीन क्रम से अक्षरों करके जो जानी जाती है। जैसे कि "क" से आरम्भ होकर "क्ष" कार पर्यंत है। इसी प्रकार विलोम रीति से आरम्भ करके ककार पर्यंत स्वरों करके युक्त और विहीन अर्थात् जैसे कि अकारादि स्वर हैं और ककारादि व्यंजन हैं। हे मां भैरवपत्नि ! ये सब तेरे ही गुह्यातिगुह्य नाम हैं। हम उन बीस सहस्र से भी अधिक नामोंवाली समस्त भगवतियों को नमस्कार करते हैं।

(२०) विद्वानों को चाहिए कि अत्यंत मनोगत करके इस लघुस्तव-संज्ञक स्तुति को जाने और इसके द्वारा त्रिपुरसुन्दरी भगवती का हृदय से मन लगाकर त्रिपुरा के तीनों बीजों का जप करे जो कि इस स्तुति के प्रथम पद्य के प्रथम, द्वितीय तथा तृतीय पाद में क्रमशः ऐं, क्लीं, सौः, रूप से सिद्ध होते हैं यही भगवती त्रिपुराबाला की सत्संप्रदायनुसार विशेष मन्त्रोद्धारविधि है।

(२१) चाहे यह स्तुति सावद्य (सदोष) अथवा निरवद्य (दोषरहित) हो इसकी चिन्ता करने की कोई आवश्यकता नहीं। हे मां ! जिसके हृदय में तेरी भक्ति है वह तो इस लघुस्तव का पाठ करेगा ही। मैंने अपने लघुत्व को जानते हुए भी हठात् उत्पन्न हुई भक्ति से मुखरित होते हुए निश्चय ही इसकी रचना कर डाली है। यह सब की कल्याणकारिणी हो।

—श्रीरस्तु—